TRIVANDRUM SANSKRIT SERIES.
No. LVII.

# रघुवीरचरितम्।

THE

# RAGHUVÎRACHARITA

EDITED BY

T. GAṆAPATI SÂSTRÎ
*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS
1917.

TRIVANDRUM SANSKRIT SERIES.
No. LVII

# THE RAGHUVÎRACHARITA

EDITED BY

T. GAṆAPATI SÂSTRÎ
*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum*

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

---

TRIVANDRUM
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS
1917.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५७.

# रघुवीरचरितम्

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितम् ।

---

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

कोलम्बाब्दाः १०९२, क्रैस्ताब्दाः १९१७.

# READY FOR SALE.

---

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Sri Râma Varma Mahârâjah. | 1 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalilâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalilâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna. | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nilakantha Dikshita | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvati | 2 | 4 | |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nilakantha. | 0 | 8 | |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Niti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition) | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mimâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I, 1st & 2nd Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I, 1st & 2nd Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II, 3rd Kânda) | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III, 4th, 5th & 6th Kândas) | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries. Prakasikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd. 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dipaprabhâ of Nârâyana | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopinâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakásikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 6th. 7th & 8th Sargas) | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvasva of Vandyaghatiya Sarvánanda (Part-I. 1st Kânda) | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankára) by Râjânaka Sri Ruyyaka with the Alankára-sarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Sri Sankara Bhagavat Pada. | 0 | 2 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha. with the two commentaries. Amarakosodghatana of Kshiraswamin and Tikasarvaswa of Vandyaghatiya Sarvananda (Part II, 2nd Kanda 1-6 Vargas) | 2 | 8 | |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Niti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition) | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mimâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I. 1st & 2nd Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I, 1st & 2nd Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II, 3rd Kânda) | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III, 4th, 5th & 6th Kândas) | 1 | 0 | 0 |

| | RS. | AS. | P |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakasikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyákarana) with the commentary Dipaprabhâ of Nârâyana | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyáya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopinâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakasikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III, 6th, 7th & 8th Sargas) | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatiya Sarvânanda (Part I, 1st Kânda) | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankara) by Râjânaka Sri Ruyyaka with the Alankárasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Sri Sankara Bhagavat Pada. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshiraswamin and Tikasarvaswa of Vandyaghatiya Sarvananda (Part II, 2nd Kanda 1-6 Vargas) | 2 | 8 | |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Niti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition) | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mimâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I, 1st & 2nd Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I, 1st & 2nd Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II, 3rd Kânda) | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III, 4th, 5th & 6th Kândas) | 1 | 0 | 0 |

| | Rs. | As. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kalidâsa with the two commentaries. Prakasikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd. 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyákarana) with the commentary Dipaprabhâ of Nârâyana | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyáya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopinâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 6th. 7th & 8th Sargas) | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvasva of Vandyaghatiya Sarvânanda (Part I, 1st Kânda) | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankára) by Râjânaka Sri Ruyyaka with the Alankárasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Sri Sankara Bhagavat Pada. | 0 | 2 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshiraswamin and Tikasarvaswa of Vandyaghatiya Sarvananda (Part II, 2nd Kanda 1-6 Vargas) | 2 | 8 | |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattáraka Sri Vedottama. | 0 | 1 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya) | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nilakantha Dikshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Sri Krishnánánda Sarasvati. (Part I) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II) | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankara) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshiraswâmin and Tikásarvaswa of Vandyaghatiya Sarvananda (Part III, 2nd Kanda 7–10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvaswa of Vandyaghatiya Saryananda (Part IV, 3rd Kanda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedánta) by Prakâsâtmayatindra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana) | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Sri Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa) | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kavya) | 1 | 4 | 0 |

***Apply to:—***

*The Agent for the sale of*
*Government Sanskrit Publications,*
*Trivandrum*

# PREFACE.

Raghuviracharita is a Mahákávya dealing with the life of Srí-Râma from his exile to his installation. The author of the work is not known, but from the high quality of the poetry, it can be inferred that he must have been a poet of merit. In his Catalogus Catalagorum Dr. Aufrecht mentions a Raghuviracharita written by Mallinâtha. If this Raghuviracharita be the same as the present work and the Mallinâtha mentioned by Dr. Aufrecht be no other than the famous commentator of Mâhâkavyas and the author of Tarala, a commentary on the work on rhetoric called Ekâvali, who is known to have flourished in the 14th Century A. D., then we can not be wrong in ascribing the present work also to the same Mallinâtha. If so, we have to suppose that Mallinâtha wrote his poetical work long after writing his Tarala, otherwise his non-reference to his poem in the latter work would seem quite inexplicable.

The edition of the work is based on the following three palm-leaf manuscripts in Malayalam characters:—

1. क. belongs to Mr. Kailasapuram Govinda Pisharodi, containing the first 14 Sargas. It is a correct and worn-out manuscript.

2. ख. belongs to Mr. Champakasseri Mitrán Numburi. It is full of errors and letters have disappeared in many of the leaves.

3. ग. belongs to Mr. Maheswaran Bhattatiri, Tukalasseri, Tiruvallah. It is an incorrect and worn-out manuscript.

Trivandrum,
17th August 1917.

T. GANAPATI SÂSTRÎ.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Sri Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya) | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nilakantha Dikshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Sri Krishnânánda Sarasvati. (Part I) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II) | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankara) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshiraswâmin and Tikâsarvaswa of Vandyaghatiya Sarvananda (Part III, 2nd Kanda 7–10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvaswa of Vandyaghatiya Sarvananda (Part IV, 3rd Kanda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedânta) by Prakâsâtmayatindra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana) | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Sri Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa) | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kavya) | 1 | 4 | 0 |

***Apply to:—***

*The Agent for the sale of*
*Government Sanskrit Publications,*
*Trivandrum*

# PREFACE.

Raghuviracharita is a Mahâkâvya dealing with the life of Srí-Râma from his exile to his installation. The author of the work is not known, but from the high quality of the poetry, it can be inferred that he must have been a poet of merit. In his Catalogus Catalagorum Dr. Aufrecht mentions a Raghuviracharita written by Mallinâtha. If this Raghuviracharita be the same as the present work and the Mallinâtha mentioned by Dr. Aufrecht be no other than the famous commentator of Mâhâkavyas and the author of Tarala, a commentary on the work on rhetoric called Ekâvali, who is known to have flourished in the 14th Century A. D., then we can not be wrong in ascribing the present work also to the same Mallinâtha. If so, we have to suppose that Mallinâtha wrote his poetical work long after writing his Tarala, otherwise his non-reference to his poem in the latter work would seem quite inexplicable.

The edition of the work is based on the following three palm-leaf manuscripts in Malayalam characters:—

1. क. belongs to Mr. Kailasapuram Govinda Pisharodi, containing the first 14 Sargas. It is a correct and worn-out manuscript.

2. ख. belongs to Mr. Champakasseri Mitran Numburi. It is full of errors and letters have disappeared in many of the leaves.

3. ग. belongs to Mr. Maheswaran Bhattatiri, Tukalasseri, Tiruvallah. It is an incorrect and worn-out manuscript.

Trivandrum,
17th August 1917.

T. GANAPATI SÂSTRÎ

# निवेदना ।

---

इदं **रघुवीरचरितं** नाम वनवासादिराज्याभिषेकान्तस्य श्रीरामचरितस्य वर्णनपरं किमपि महाकाव्यम् । अत्र प्रकाशमानैः साहितीगुणैरेतत्प्रणेता कश्चिद् विशिष्टः कविरित्यूहितुं शक्यम् । नामधेयं तु तस्य ग्रन्थे न निवेशितम् । डाक्टर्आफ्रेट्सम्पादिते ग्रन्थनामावलिपुस्तके (Dr. Aufrechts catalogue catalagorum) **रघुवीरचरितं** किमपि **मल्लिनाथ**प्रणीतं निर्दिश्यते । तद् यद्येतदेव भवेद्, यदि च स **मल्लिनाथ एकावलितरल-रघुवंशटीका**दिकारादनन्यो भवेत्, तर्हि तस्य क्रैस्ताब्दीयचतुर्दशशतकस्थितस्य कृतितामिदं महाकाव्यं निकाममर्हति । किन्तु अस्य **मल्लिनाथ**कृतित्वे **तरल**निर्माणानन्तरमिदं निर्मितमिति कल्पनीयम्, अन्यथा हि एतदीयस्यैकस्यापि पद्यस्य तरलेऽनुदाहरणं युक्त्यपेतमिव भायात् ।

अस्य ग्रन्थस्य संशोधनाधारभूता ग्रन्थास्तावत् त्रयः । तत्र—

क.संज्ञः कैलासपुरगोविन्दपिषारोटिस्वामिकः १४ सर्गान्तः जीर्णः शुद्धश्च ।

ख.संज्ञः चम्पकश्शेरिमित्रनम्बूरिस्वामिकः अशुद्धप्रायः लुप्ताक्षरबहुपत्रश्च ।

ग.संज्ञः तिरुवल्ला तुगलश्शेरिमहेश्वरभट्टतिरिसम्बन्धी अशुद्धप्रायो जीर्णश्च ।

सर्वे एते केरलीयलिपयस्तालपत्रात्मकाः ।

अनन्तशयनम्, १७-८-१९१७.

त. गणपतिशास्त्री.

॥ श्रीः ॥

# रघुवीरचरितम् ।

## प्रथमः सर्गः ।

श्रियः शिवं धाम सदारसोदरः प्रविश्य रामः पितृवाक्यगौरवात् ।
वनं महद् दण्डकमाश्रयः सतां तपस्विनामाश्रमजातमैक्षत ॥ १ ॥

अनुल्बणस्कन्धनिषण्णवल्कलाः सहिष्णवस्तापहिमाभ्रपाथसाम् ।
लसन्ति यत्र प्रतिपन्नगौरवा द्रुमा मुनीनां परिचारका इव[1] ॥ २ ॥

ऋजुत्वभाजः कृतवायुनिर्जया लतावितानैर्जटिलाः समन्ततः ।
समग्रशाखाविहितद्विजाश्रया महीरुहा यत्र तपोधना इव ॥ ३ ॥

वितन्वते यत्र घनाभ्रमेचकाः स्वकर्णतालोत्तरलालिपेशलाः ।
मदालसाः सिंहसटावघर्षणैः कपोलकण्डूतिसुखं विषाणिनः ॥ ४ ॥

निशासु नित्यं निविडाङ्गसङ्ग्रहा महीपतीनामिव यत्र योगिनाम् ।
फणामणिभ्यः प्रसृतैर्मरीचिभिः प्रदीपकृत्यं प्रदिशन्ति भोगिनः ॥ ५ ॥

उदीयमानस्तबकस्तनोज्ज्वलाः समीरणास्पन्दितपल्लवाधराः ।
मनोहरा यत्र लता महीरुहान् सदोपगूहन्ति मधुव्रतेक्षणाः ॥ ६ ॥

अरण्यवीरुत्प्रसवोदरोद्गतः प्र[2]फुल्लपङ्केरुहपद्मिनीसखः ।
प्रकल्पते यत्र शिवः समीरणः शरीरभाजां प्रशमाय चेतसः ॥ ७ ॥

पचेलिमानां तपसां प्रभावतस्तपोनिधीनां तपनोग्रतेजसाम् ।
न विद्यते यत्र निषेदुषां नृणां मदैकयोनिर्मदनस्य विक्रिया ॥ ८ ॥

तपःसमाधिस्थिरगात्रचेतसां तपोभृतां यत्र पिशङ्गकान्तिषु ।
जटाटवीषु प्रतिबद्धनिश्चयाः कुलायकर्माकलयन्ति पत्त्रिणः ॥ ९ ॥

निशम्य तं प्राप्तमरण्यवासिनः प्रियं विधातुं फलमूलपाणयः ।
विमुक्तबन्धा अपि पक्षपातिनः प्रपेदिरे हर्षयुता महर्षयः ॥ १० ॥

---

१. 'स', २. 'ल्ल' ख. पाठः.

G. P. T. 245. 500. 7-5-1092.

निशाम्य तानापततस्तपोधनाञ्जवेन मौर्वीमवरोप्य कार्मुकात् ।
प्रसीदतास्मास्विति वाचमादरादुदीर्य तेभ्यः प्रणनाम राघवः ॥ ११ ॥

अथैनमुत्थाप्य गुणैकभाजनं विदेहपुत्रीमपि लक्ष्मणं तथा ।
निरीक्ष्य दृष्ट्या शिवया शिवोपया गभीरहृद्यामिति वाचमूचिरे ॥१२॥

श्रुतोऽसि पूर्वं नरदेव! जन्मना विभूषयन्नुत्तरकोसलान्वयम् ।
यदानुजैः सार्धमतः परं वयं विशेषतः पङ्क्तिरथे सकौतुकाः ॥ १३ ॥

यदासि पौगण्डवयः समाश्रितः क्रमेण शस्त्रास्त्रपरिग्रहोचितः ।
तदैव रक्षःकृतकृच्छ्रमन्थरा सनाथतां प्राप्तवती वसुन्धरा ॥ १४ ॥

यदासि नीतः क्रतुलोपशान्तये तपोवनं गाधिसुतेन सानुजः ।
अवाप्तवानस्त्रमयीं च सत्क्रियामतः परं नः क्षपिता विपत्तयः ॥ १५ ॥

त्वया यदा राघव! भीमदर्शनं महत् तमः कामद! ताटकामयम् ।
शरार्चिषाबाधि तदाप्रभृत्यमी तपोभृतः सम्मदसम्भृताशयाः ॥ १६ ॥

विचित्रविष्फारितचापमण्डलः स्थितः क्रतुक्षेमविधौ यदा तदा ।
अपाहरत् तात! भवानपुष्कलस्फुरत्परीवेषनवार्कविभ्रमम् ॥ १७ ॥

क्षयं गतौ यावदुभौ निशाचरौ निशातशूलाग्रविभिन्नतापसौ ।
त्वदग्रतः कौशिकयज्ञविद्विषौ तपस्विनां तावदवग्रहः क्षतः ॥ १८ ॥

अमोचि शापव्यसनादहल्यया भवत्पदाम्भोजपरागपूतया ।
[3]भवद्विधानां न तु चित्रमीदृशं महीयसामार्तहितैकसम्पदाम् ॥ १९ ॥

दुरानमं नाम धनुर्धनुर्भृतां पुनः पुरारेः समभज्यत त्वया ।
अनेन युष्मद्भुजदण्डमैहिरं विशेषवृत्त्या बहुमन्महेतराम् ॥ २० ॥

यथा विभाते मिहिरं सरोजिनी तथैव रामं समवाप मैथिली ।
इति प्रमोदोदयमेदुरास्तदा गिरः प्रचेरुर्भुवने निरत्ययाः ॥ २१ ॥

सकौतुकं कौशिकमन्वगीयुपा हरस्य चापं विफलं वितन्वता ।
विधातुरस्यास्तनुशिल्पचातुरीविधानयत्नः सफलीकृतस्त्वया ॥ २२ ॥

पितुर्नियोगादतिमार्गगामिनः स्वमातरं स्नेहरसस्नुतस्तनीम् ।
प्रगृह्य केशेष्वकुशेन कर्मणा कृपापलापं प्रथमं चकार यः ॥ २३ ॥

---

१. 'ह्व' ख. पाठः. २. 'शा' क. पाठः. ३. 'ततः परस्तान्न तु' ख. पाठः.

निकृत्य बाहासमिधः कुठारवान् सहस्रसंख्याः परमर्जुनद्रुमात् ।
स्थिरव्रतः शोणितसर्पिराहुता जुहाव कोपाग्निमुखे सुखेन यः ॥ २४ ॥

अनेकशः क्षत्रकुलस्य विप्लवं वितन्वता येन गभीरमन्युना ।
प्रतिष्ठिता केवलमिन्दुसोमयोः प्रसह्य राजेत्यनुभाविनी श्रुतिः ॥ २५ ॥

तमध्वनि क्षत्रियगन्धदुर्दमं विजित्य रामं जमदग्निनन्दनम् ।
स्वतेजसा मानद! शुश्रुम स्फुटं स्वधर्मनिष्ठामनयद् भवानिति ॥

प्रविश्य साकेतपुरं पुरालयैः समं त्रिभिर्भ्रातृभिराहितोत्सवः ।
क्रमेण निर्वृत्तविवाहमङ्गलस्त्वमन्वभूर्भोगरसाननुत्तमान् ॥ २७ ॥

अथाभिषेके तव तात! संभृते निमन्त्र्य मैत्रावरुणिं पुरोधसम् ।
महीभृता पङ्क्तिरथेन मन्थरा प्रकाशतामात्मधियं किलानयत् ॥ २८ ॥

न मन्युरस्मासु करोतु विभ्रमं महेन्द्रहेतिर्गिरिसञ्चयेष्विव ।
न मन्थराकर्मसमो विधिर्यतो वनौकसामक्षिपथं गतोऽसि नः ॥

प्रविश्य या केकयराजनन्दनामुपायरूपेण नरेन्द्रमाश्रयत् ।
तव प्रवासाय निबद्धनिश्चया न तत्समं मित्रमिहास्ति मादृशाम् ॥

स ते पिता यस्य सुहृत् सुरेश्वरः क्षमा च यस्य क्षितिकौतुकावहा ।
यदत्यजत् त्वां वचनेन योषितश्चिरार्जितानां तपसां फलं हि नः ॥

नवे दुकूले दधतश्च मङ्गले तवाददानस्य च चीरचीवरम् ।
समैव जाता मुखकान्तिरित्यसौ जनश्रुतिः कापि धिनोति मादृशान् ॥

अयं तु सौमित्रिरमित्रमर्दनस्तृणाय मत्वा महतीमपि श्रियम् ।
भवन्तमेवानुगतः सुखोचितः स्वनुष्ठितं धर्ममिवार्थसङ्ग्रहः ॥ ३३ ॥

अरण्यवासाय शरण्य! जानकी नियोजिता मध्यमया सुमध्यमा ।
यदम्बयालम्बितभर्तृचित्तया तया तदे[1]वोपकृतं भवत्कृते ॥ ३४ ॥

त्वयि स्थिते तादृशि गन्तुमुद्यते न केवलं केकयनन्दनाशिषा ।
अशेषनिर्वापितहर्षचेतसां पुरौकसामश्रुभिरप्युदैयत ॥ ३५ ॥

विलङ्घ्य भूतेश्वरमौलिमालिकाममर्त्यसिन्धुं सुरसिन्धुरोपमः ।
गुहोपनीतामधिगम्य सत्क्रियां स चित्रकूटं प्रतिपेदिवानसि ॥ ३६ ॥

१. 'दै' ग. पाठः.

भवत्प्रवासोपचिताधिरात्मनः शरीरमुत्सृज्य नवीकृताकृतिः ।
दिवं गतः पङ्क्तिरथः कुशोचितां सकेश्यन् वासवसौहृदस्थितिम् ॥

तदा किल त्वां भरतः सहानुगः स्वयं भरद्वाजकृतार्हणाविधिः ।
निमन्त्रयामास नृपश्रिया तया तटं नभस्वानिव सिन्धुवेलया ॥ ३८ ॥

महाटवीं मार्गविकीर्णकण्टकां भवद्वियोगव्यसनादुपेयुषी ।
प्रदाय सद्यः कृपया स्वपादुके यथागतं सा गमिता किल त्वया ॥

अबालजाबालिमुखैर्मनीषिभिः प्रयुक्तसामा भरतानुवर्तिभिः ।
प्रवेशितः कर्णपथं जनैर्भवान् धृतिच्युतिं न प्रतिपेदिवानिति ॥ ४० ॥

स्वमातृदोषात् तव विप्रवासतः पितुश्च नाशादुदितेन मन्युना ।
दृढापविद्धो भरतस्त्वयोत्सुकश्चकार सौभ्रात्ररसायनक्रियाम् ॥ ४१ ॥

प्रतिप्रयाते भरते सहानुगे जटासु कृत्वा तव पादुके शुभे ।
मनस्विनामाशयवृत्तिरीदृशी न जातु भेद्येत्युदियाय भारती ॥ ४२ ॥

तदानसूयात्रिपरिग्रहो[1] मुदा तपस्ययास्या वपुरन्वलेपयत् ।
समन्वितार्थं निजनाम तन्वती न कस्य लक्ष्म्यै महतां समागमः ॥

इमां वधूं वायसदूषितस्तनीं हिमोपसृष्टामरविन्दिनीमिव ।
निशम्य युष्मानधिकृत्य भाविनी विपत्तिरस्माभिरिहान्वमीयत ॥ ४४ ॥

इदं विरिञ्चिप्रतिमैस्त[2]पोधनैरुपस्थितब्रह्मभिरप्युपाश्रितम् ।
वनं विशेषेण जगत्प्रसाधनैः पवित्रितं त्वत्पदपद्मपांसुभिः ॥ ४५ ॥

सबाणबाणासनपाणिबन्धुरं घनावदातद्युति वल्कलाम्बरम् ।
कुशेशयान्तर्दलचारुलोचनं मृदुस्मितालङ्कृतिपेशलाननम् ॥ ४६ ॥

महर्षभस्कन्धमनन्तविक्रमं पिशङ्गकोटीरकलापशेखरम् ।
इदं वपुस्ते जगदेकमङ्गलं वयं पिबामस्तृषितैर्विलोचनैः ॥ ४७ ॥

कृतं वचोभिर्बहुभिः श्रमप्रदैर्धनुर्धराणां वर ! भद्रमस्तु ते ।
तवेक्षमाणा न वपुर्मनश्शिवं व्रजन्ति पर्याप्तिमरण्यवासिनः ॥ ४८ ॥

---

१. 'हः स्वया त', २. 'मुखैस्त' ख. पाठः.

तदेतदाकर्णय राम! दुःश्रवं तपस्विनां नः परिदेविताक्षरम् ।
त्वमग्रणीः सर्वधनुर्भृतामिति श्रितोऽसि सद्यः प्रतिपद्य गौरवम् ॥

इयं द्विजातिप्रचुरा निशाचरैर्महद्भिरारण्यकजातिरातुरा ।
झषावली घर्महतेव वारिदं सलक्ष्मणं त्वां शरणं प्रतीच्छति ॥ ५० ॥

वसन् पुरे स्वे वनगोचरोऽथवा ससैनिकश्चापसहाय एव वा ।
पितुः प्रियस्तेन निराकृतोऽपि वा त्वमेव नः शर्मद ! सर्वदा गतिः ॥

यदस्ति सिद्धं फलमन्यलोकतस्तदश्नुते नश्वरतां जनेश्वर! ।
नृपस्य यत् तापसरक्षणोदितं तदेव कल्पान्तरनान्तरीयकम् ॥ ५२ ॥

निमित्तमल्पं व्यपदिश्य दैहिकं प्रकोपमङ्गीकुरुते न नो मनः ।
यदीयशक्त्याहितशापविभ्रमः क्षयं नयेन्नश्चिरसम्भृतं तपः ॥ ५३ ॥

इमामवेक्षस्व तपोवनस्थलीं तपस्विनां मुण्डजटास्थिदुःस्थिताम् ।
ककुत्स्थवंश्ये त्वयि तादृशोदये सति प्रपन्ना वयमीदृशीं दशाम् ॥ ५४ ॥

तदस्तु ते स्वस्ति चिराय मादृशामरिष्टतातिर्भव भव्यया धिया ।
स्वचापविन्यस्तजयाशिषः सतस्तवापदानं भुवनेषु खेलतु ॥ ५५ ॥

सदस्तदित्थं व्यवहृत्य भारतीं रघुप्रवीराय हितानुबन्धिनीम् ।
बभूव तूष्णीमपि सङ्कटे महत्ययावदर्थं न वदन्ति साधवः ॥ ५६ ॥

ततस्तदाभाषितमाहृतादरः क्रमेण सङ्कृत्य ककुत्स्थनन्दनः ।
तदीययाविष्ट इव स्वयं शुचा जगाद भूयः प्रमिताक्षरं वचः ॥ ५७ ॥

इदं मुनीन्द्राः! क्रियते समानतं मया निबद्धाञ्जलिबन्धुरं शिरः ।
अभूद् यदेनो भवतामरक्षणात् तदर्हथ क्षन्तुमजानतो हि नः ॥ ५८ ॥

इतः परस्तादपनीतराक्षसप्रचारमुच्छिन्नभयं तपोवनम् ।
करिष्यते सावरजो वदामि वः स्थितः पुरस्तात् प्रगृहीतकार्मुकः ॥ ५९ ॥

कृतार्थयन्नित्यभिधाय तान् विभुस्ततः सपर्यां प्रवणः समाददे ।
विपद्गतानामविधाय रक्षणं न सत्क्रियामाददते हि तादृशाः ॥ ६० ॥

ततोऽपराह्णे नवसङ्गमोचिताः कथा मनोज्ञा व्यवहृत्य ते पुनः ।
परस्परेण ग्रथिता मनोरथैरविप्रलम्भप्रणयं वितेनिरे ॥ ६१ ॥

---

१. 'वि', २. 'स', ३. 'मनांस्यनाप्याय विपत्तिमज्जतां न' ख. पाठः.

अविस्रविस्रम्भमनुप्रपन्नशालिनीं कुरङ्गशावानविकङ्कमङ्कगान् ।
स मैथिलीलोचनकान्तितस्करानुदीक्ष्य सद्यान् नितरामशङ्कत ॥ ६२ ॥

निरत्ययप्रत्ययबन्धलिप्सया निरीक्षमाणा भृशमृश्यपङ्क्तयः ।
उदात्तकोदण्डभुजं रघूद्वहं चिराय निश्चुम्बितनार्थिनो दृशः ॥ ६३ ॥

अथोल्लसत्पल्लवपादलम्बितां निरन्तरालीं पितृतुल्यविक्रमः ।
विकस्वराम्भोजरुचिप्रवर्षिणीं प्रशान्तधीरिन्दुमतीमवन्दत ॥ ६४ ॥

तैर्दत्तामृषिभिरवाप्य पर्णशालां कुम्भाण्डैरजिनसमित्कुशैश्च कीर्णाम् ।
सानन्दं जनकसुतोपधानभूतप्रालम्बस्थिरभुजमध्युवास रामः ॥ ६५ ॥

इति रघुवीरचरिते प्रथमः सर्गः ।

---

अथ द्वितीयः सर्गः ।

अथ प्रभाते विमले तानामन्त्र्य मुनीन् विभुः ।
अरण्यानीं विवेशोच्चैर्मोक्षानिव घनावलिम् ॥ १ ॥

कण्टकोपलदुर्गेषु चरन्तौ विपिनेषु ते ।
संहता न व्यथां जग्मुर्मातृपार्श्वगता इव ॥ २ ॥

रेजतुः पालयन्तौ तौ मैथिलीं रामलक्ष्मणौ ।
तमःप्रभेदिनीं विद्यां प्रबोधविनयाविव ॥ ३ ॥

मध्येकृत्य सुमध्यां तां जग्मतुस्तौ महौजसौ ।
नयनानन्दिनीं सन्ध्यां सूर्याचन्द्रमसाविव ॥ ४ ॥

तदा रक्षो विराधाख्यं सीताहारमपासरत् ।
तौ वरेण विधेगुप्तं तदुपायेन जघ्नतुः ॥ ५ ॥

विमुक्तशापबन्धेन तेन दिव्यवपुर्भृता ।
उपदिष्टेन मार्गेण शरभङ्गाश्रमं ययुः ॥ ६ ॥

तस्मिन्नुपनते वीरे शरभङ्गदिदृक्षया ।
आरादासेदिवान् व्योम्नि सहस्राक्षस्तिरोभवन् ॥ ७ ॥

---

१. 'त्तां श्रमशमनाय प' ख. ग. पाठः.

अपवर्गपथं वह्निं प्रवेक्ष्यन् स तपोधनः ।
तापसैः सुरसङ्घैश्च सकौतुकमदृश्यत ॥ ८ ॥

रामोऽभिरामचरितस्तपोभिस्तपनोपमः ।
अनल्पैरल्पपुण्यानां दुरासदमुपासदत् ॥ ९ ॥

परिपक्केन मनसा वपुषा चान्वितो मुनिः ।
ददर्श दर्शनीयं तं प्रीतिस्निग्धेन चक्षुषा ॥ १० ॥

आह च स्वागतं तेऽस्तु सफलो नः परिश्रमः ।
लोचने यौवनं प्राप्ते त्वामास्वाद्य रसायनम् ॥ ११ ॥

अधिगन्तुं तपस्तीव्रं दीर्घमायुर्धृतं मया ।
देशकालदशाभेदेष्वपि यन्न व्ययोन्मुखम् ॥ १२ ॥

आन्तरोपाधिसङ्क्रान्तमहिमामर्चितामिमाम् ।
तनुं त्यक्ष्याम्यहं तावज्जीर्णां त्वचमिवोरगः ॥ १३ ॥

इत्थमुत्थितवाग्वृत्तिर्निजमात्मानमात्मवान् ।
हव्यं हव्यवहे हुत्वा पदमस्खलितं गतः ॥ १४ ॥

तथाविधदशे तस्मिन् मिथः सम्भूय भूयसीम् ।
तापसा रघुवीराय रक्षोबाधामबोधयन् ॥ १५ ॥

प्रतिश्रुत्य ततो रक्षां तेभ्यः[1] सत्यप्रतिश्रवः ।
अतीक्ष्णचरितो[2] देवः सुतीक्ष्णस्याश्रमं ययौ ॥ १६ ॥

उच्चसाललतागुल्मपल्लवान्तरनिस्सृतैः ।
मुद्रिताजिरभूभागं चित्रैरातपबिन्दुभिः ॥ १७ ॥

वैतानिकानलोद्गीर्णैर्हव्यपाकसुगन्धिभिः ।
समृद्धिहेतोर्लोकानां मेघशावैरिवोत्थितैः ॥ १८ ॥

नाकलोकाध्वसम्पातं दर्शयद्भिरिवोन्मुखैः ।
सुखस्पर्शेन वातेन स्फारितोच्चावचोद्गमैः ॥ १९ ॥

आतपस्तोकमार्गान्तर्गोचरैः कपिशाकुलैः ।
श्रीमन्मरकतस्तम्भदण्डबन्धुरकान्तिभिः ॥ २० ॥

---

१, 'स तु स', २. 'तः श्रीमान् सु' ख. पाठः,

अविस्रविस्रम्भमनु[illegible] कु[illegible]विधमङ्गमङ्गान् ।
स मैथिलीलोचन[illegible]कुतूहलात् नितरामशङ्कत ॥ ६२ ॥

निरत्ययप्रत्यय[illegible] [illegible] भृङ्ग[illegible]पङ्क्तयः ।
उदात्तकोदण्डभुजं रघूद्वहं [illegible] [illegible]थिनां दृशः ॥ ६३ ॥

अथोल्लसत्पल्लवपा[illegible] [illegible] पितृतुल्यविक्रमः ।
विकस्वराम्भोजरुचिप्रवर्धिनीं [illegible]धीरिन्दुमतीमवन्दत ॥ ६४ ॥

तैर्दत्तामृषिभिरवाप्य पर्णशालां [illegible]रजिनसमित्कुशैश्च कीर्णाम् ।
सानन्दं जनकसुतोपधान[illegible]भुजमध्युवास रामः ॥ ६५ ॥

इति रघुवीरचरिते प्रथमः सर्गः ।

---

अथ द्वितीयः सर्गः ।

अथ प्रभाते विमले तानामन्त्र्य मुनीन् विभुः ।
अरण्यानीं विवेशोच्चैर्भास्वानिव घनावलिम् ॥ १ ॥

कण्टकोपलदुर्गेषु चरन्तो विपिनेषु ते ।
संहता न व्यथां जग्मुर्मातृपार्श्वगता इव ॥ २ ॥

रेजतुः पालयन्तौ तौ मैथिलीं रामलक्ष्मणौ ।
तमःप्रभेदिनीं विद्यां प्रबोधविनयाविव ॥ ३ ॥

मध्येकृत्य सुमध्यां तां जग्मतुस्तौ महौजसौ ।
नयनानन्दिनीं सन्ध्यां सूर्याचन्द्रमसाविव ॥ ४ ॥

तदा रक्षो विराधाख्यं सीताहारमपासरत् ।
तौ वरेण विधेर्गुप्तं तदुपायेन जघ्नतुः ॥ ५ ॥

विमुक्तशापबन्धेन तेन दिव्यवपुर्भृता ।
उपदिष्टेन मार्गेण शरभङ्गाश्रमं ययुः ॥ ६ ॥

तस्मिन्नुपनते वीरे शरभङ्गदिदृक्षया ।
आरादासेदिवान् व्योम्नि सहस्राक्षस्तिरोभवन् ॥ ७ ॥

---

१. 'त्तां श्रमशमनाय प' ख. ग, पाठः.

अपवर्गपथं वह्निं प्रवेक्ष्यन् स तपोधनः ।
तापसैः सुरसङ्घैश्च सकौतुकमदृश्यत ॥ ८ ॥

रामोऽभिरामचरितस्तपोभिस्तपनोपमः ।
अनल्पैरल्पपुण्यानां दुरासदमुपासदत् ॥ ९ ॥

परिपक्वेन मनसा वपुषा चान्वितो मुनिः ।
ददर्श दर्शनीयं तं प्रीतिक्लिन्नेन चक्षुषा ॥ १० ॥

आह च स्वागतं तेऽस्तु सफलो नः परिश्रमः ।
लोचने यौवनं प्राप्ते त्वामास्वाद्य रसायनम् ॥ ११ ॥

अधिगन्तुं तपस्तीव्रं दीर्घमायुर्धृतं मया ।
देशकालदशाभेदेष्वपि यन्न व्ययोन्मुखम् ॥ १२ ॥

आन्तरोपाधिसङ्क्रान्तमहिमावचितामिमाम् ।
तनुं त्यक्ष्याम्यहं तावज्जीर्णां त्वचमिवोरगः ॥ १३ ॥

इत्थमुत्थितवाग्वृत्तिर्निजमात्मानमात्मवान् ।
हव्यं हव्यवहे हुत्वा पदमस्खलितं गतः ॥ १४ ॥

तथाविधदशे तस्मिन् मिथः सम्भूय भूयसीम् ।
तापसा रघुवीराय रक्षोबाधामबोधयन् ॥ १५ ॥

प्रतिश्रुत्य ततो रक्षां तेभ्यः सत्यप्रतिश्रवः ।
अतीक्ष्णचरितो देवः सुतीक्ष्णस्याश्रमं ययौ ॥ १६ ॥

उच्चसाललतागुल्मपल्लवान्तरनिस्सृतैः ।
मुद्रिताजिरभूभागं चित्रैरातपबिन्दुभिः ॥ १७ ॥

वैतानिकानलोद्गीर्णैर्हव्यपाकसुगन्धिभिः ।
समृद्धिहेतोर्लोकानां मेघशावैरिवोत्थितैः ॥ १८ ॥

नाकलोकाध्वसम्पातं दर्शयद्भिरिवोन्मुखैः ।
सुखस्पर्शेन वातेन स्फारितोच्चावचोद्गमैः ॥ १९ ॥

आतपस्तोकमार्गान्तर्गोचरैः क्वचिदाकुलैः ।
श्रीमन्मरकतस्तम्भदण्डबन्धुरकान्तिभिः ॥ २० ॥

---

१. 'स तु स', २. 'तः श्रीमान् सु' ख. पाठः,

अविस्रविस्रम्भमुपस्तपस्विनां कुरङ्गशावानविशङ्कमङ्कगान् ।
स मैथिलीलोचनकान्तितस्करानुदूर्ध्वशृङ्गान् नितरामशङ्कत ॥ ६२ ॥

निरत्ययप्रत्ययबन्धनिश्चला निरीक्षमाणा भृशमृश्यपङ्क्तयः ।
उदात्तकोदण्डभुजं रघूद्वहं चिराय निन्युश्चरितार्थतां दृशः ॥ ६३ ॥

अथोल्लसत्पल्लवपाटलाम्बरां पितृप्रसूतिं पितृतुल्यविक्रमः ।
विकस्वराम्भोजरुचिप्रवर्धिनीं प्रशान्तधीरिन्दुमतीमवन्दत ॥ ६४ ॥

तैर्दत्तामृषिभिरवाप्य पर्णशालां कुश्माण्डैरजिनसमित्कुशैश्च कीर्णाम् ।
सानन्दं जनकसुतोपधानभूतप्रालम्बस्थिरभुजमध्युवास रामः ॥ ६५ ॥

इति रघुवीरचरिते प्रथमः सर्गः ।

---

अथ द्वितीयः सर्गः ।

अथ प्रभाते विमले तानामन्त्र्य मुनीन् विभुः ।
अरण्यानीं विवेशोच्चैर्भास्वानिव घनावलिम् ॥ १ ॥

कण्टकोपलदुर्गेषु चरन्तो विपिनेषु ते ।
संहता न व्यथां जग्मुर्मातृपार्श्वगता इव ॥ २ ॥

रेजतुः पालयन्तौ तौ मैथिलीं रामलक्ष्मणौ ।
तमःप्रभेदिनीं विद्यां प्रबोधविनयाविव ॥ ३ ॥

मध्येकृत्य सुमध्यां तां जग्मतुस्तौ महौजसौ ।
नयनानन्दिनीं सन्ध्यां सूर्याचन्द्रमसाविव ॥ ४ ॥

तदा रक्षो विराधाख्यं सीताहारमपासरत् ।
तौ वरेण विधेर्गुप्तं तदुपायेन जघ्नतुः ॥ ५ ॥

विमुक्तशापबन्धेन तेन दिव्यवपुर्भृता ।
उपदिष्टेन मार्गेण शरभङ्गाश्रमं ययुः ॥ ६ ॥

तस्मिन्नुपनते वीरे शरभङ्गदिदृक्षया ।
आरादासेदिवान् व्योम्नि सहस्राक्षस्तिरोभवन् ॥ ७ ॥

---

१. 'त्तां श्रमशमनाय प' ख. ग. पाठः.

अपवर्गपथं वह्निं प्रवेक्ष्यन् स तपोधनः ।
तापसैः सुरसङ्घैश्च सकौतुकमदृश्यत ॥ ८ ॥

रामोऽभिरामचरितस्तपोभिस्तपनोपमः ।
अनल्पैरल्पपुण्यानां दुरासदमुपासदत् ॥ ९ ॥

परिपक्वेन मनसा वपुषा चाग्निगो मुनिः ।
ददर्श दर्शनीयं तं प्रीतिस्निग्धेन चक्षुषा ॥ १० ॥

आह च स्वागतं तेऽस्तु सफलो मे परिश्रमः ।
लोचने यौवनं प्राप्ते त्वामास्वाद्य रसायनम् ॥ ११ ॥

अधिगन्तुं तपस्तीव्रं दीर्घमायुर्धृतं मया ।
देशकालदशाभेदेष्वपि यत्र व्ययोन्मुखम् ॥ १२ ॥

आन्तरोपाधिसङ्क्रान्तमहिमापचितामिमाम् ।
तनुं त्यक्ष्याम्यहं तावज्जीर्णां त्वचमिवोरगः ॥ १३ ॥

इत्थमुत्थितवाग्वृत्तिर्निजमात्मानमात्मवान् ।
हव्यं हव्यवहे हुत्वा पदमस्खलितं गतः ॥ १४ ॥

तथाविधदशे तस्मिन् मिथः सम्भूय भूयसीम् ।
तापसा रघुवीराय रक्षोबाधामबोधयन् ॥ १५ ॥

प्रतिश्रुत्य ततो रक्षां तेभ्यः[1] सत्यप्रतिश्रवः ।
अतीक्ष्णचरितो देवः सुतीक्ष्णस्याश्रमं ययौ ॥ १६ ॥

उच्चसाललतागुल्मपल्लवान्तरनिस्सृतैः ।
मुद्रिताजिरभूभागं चित्रैरातपबिन्दुभिः ॥ १७ ॥

वैतानिकानलोद्गीर्णैर्हव्यपाकसुगन्धिभिः ।
समृद्धिहेतोर्लोकानां मेघशावैरिवोत्थितैः ॥ १८ ॥

नाकलोकाध्वसम्पातं दर्शयद्भिरिवोन्मुखैः ।
सुखस्पर्शेन वातेन स्फारितोच्चावचोद्गमैः ॥ १९ ॥

आतपस्तोकमार्गान्तर्गोचरैः कलिताकुलैः ।
श्रीमन्मरकतस्तम्भदण्डबन्धुरकान्तिभिः ॥ २० ॥

---

१. 'स तु स', २. 'तः श्रीमान् सु' ख. पाठः.

पल्लवस्पन्दनोद्भ्रान्तैः कपोतगलकर्बुरैः ।
धूमैरुद्धूतदुरितैरन्धीकृतदिगन्तरम् ॥ २१ ॥

शुकैर्ऋषीणां शृण्वद्भिर्मन्त्रोच्चरितमध्वरे ।
अन्वभ्यस्तवषट्कारं तरुकोटरसंश्रयैः ॥ २२ ॥

स्नुतमग्रस्तनं मातुश्चुम्बतामन्तरान्तरा ।
मुग्धानां मृगपोतानां ताण्डवैरङ्किताङ्गणम् ॥ २३ ॥

तत् प्रविश्याश्रमपदमनुज्ञातो महर्षिणा ।
ववन्दे चरणौ तस्य विधिना विहिताशिषः ॥ २४ ॥
(कुलकम्)

मुनिः[1] शुभारम्भरतं भरताग्रजमग्रतः ।
निषण्णमविषण्णात्मा प्रोचे प्राचेतसोपमः ॥ २५ ॥

ऋश्यशृङ्गस्य तपसा कौसल्यायां तवोदयम् ।
महान्ति चापदानानि शुश्रुवानस्मि सर्वशः ॥ २६ ॥

किन्तु दाशरथे! तावद् वक्ष्यामि विदुषेऽपि ते ।
त्वया कृतावधानेन कर्णयोः क्रियतामदः ॥ २७ ॥

उन्नतोऽयं महान् वंशः श्रीमानिक्ष्वाकुसंश्रयः ।
दृढमूलतया नासौ मरुद्भिरपि बाध्यते ॥ २८ ॥

अनुक्षणं वितन्वाना गुर्वी जनपदापदम् ।
पङ्कसुहृदस्तीक्ष्णा यत्र नोद्यन्ति कण्टकाः ॥ २९ ॥

चतुर्वर्णस्थितिकृतां चतुराश्रमरक्षिणाम् ।
चतुर्वेदप्रवीणानां चतुरोदन्तसम्पदाम् ॥ ३० ॥

प्रशमे मुनिकल्पानां प्रकोपे रुद्रकर्मणाम् ।
प्रार्थिभ्यः कल्पदारूणां प्रसादे शशिवर्चसाम् ॥ ३१ ॥

स्वायत्ताखिलसिद्धीनां स्वमनीषाक्षमन्त्रिणाम् ।
स्वचापमात्रमित्राणां स्वदारानन्यदर्शिनाम् ॥ ३२ ॥

बुद्ध्या बृहस्पतिजितां धैर्येणाक्षिपतां धरम् ।
कान्त्या कन्दर्पतुल्यानां वीर्येणेन्द्रमतीयुषाम् ॥ ३३ ॥

---

१. 'ततः शु', २. 'धर्मिणाम्' ख. पाठः.

त्रिलोकीहर्म्यभूखेलत्कीर्त्तिज्योत्स्नाहिमत्विषाम् ।
आर्तत्राणैकनिष्ठानां त्वादृशां यत्र सम्भवः ॥ ३४ ॥
(कुलकम्)

न प्रवेष्टव्यमैक्ष्वाकैरन्येषां भूभृतां पुरम् ।
उत्तीर्णपदमारूढाः सम्राजः खलु ते यतः ॥ ३५ ॥

प्राक्सम्बन्धकृतां राज्ञां स्वयंवरनिमन्त्रणे ।
स्वचित्ताभिमतं तच्चेत् भाव्यं तत्पुरं तदा ॥ ३६ ॥

आर्तानुकम्पा साधूनां रक्षणं खलनिग्रहः ।
रणेषु विजयश्चेति व्रतानि नियतानि वः ॥ ३७ ॥

कुलस्य मित्रं युष्माकं देवराजः शचीपतिः ।
स वर्षेणोपकुरुते यूयमध्वरकर्मणा ॥ ३८ ॥

बहुना किमिहोक्तेन पूर्वेषां ते महीक्षिताम् ।
अर्धासनं महेन्द्रस्य विक्रमाधिगतं पदम् ॥ ३९ ॥

राम! राजर्षिभिः पूर्वैः क्षुण्णेन महता पथा ।
सञ्चरस्व यतस्तेन विचरन् नावसीदति ॥ ४० ॥

असंवृतमदास्तात! संवृतानिह तापसान् ।
लुम्पन्ति यातुधाना नस्त्वमत्र परमा गतिः ॥ ४१ ॥

अनन्यसदृशौदार्यास्ते यूयं रघवः खलु ।
येषामङ्के शिरः कृत्वा लोकः स्वपिति निर्भयम् ॥ ४२ ॥

अगस्त्यभ्रातुरादेशमिति सङ्गृह्य सादरः ।
जगाम रामः प्रमदं वृत्तेनागमयच्च तम् ॥ ४३ ॥

कुले जातः कुलपतेर्नियोगं प्राप्य योगिनः ।
निर्ध्यातुं दण्डकारण्यं ययौ दण्डधराग्रणीः ॥ ४४ ॥

पवमानमिवाम्भोदा धर्ममर्थागमा इव ।
राघवं तापसा निम्नं वारिवेगा इवान्वयुः ॥ ४५ ॥

स लुलायविषाणाग्रक्षुण्णमालकुशेशयान् ।
पत्रनिष्पन्दविहगान् कासारानवलोकयन् ॥ ४६ ॥

---

१. 'धार्मिणाम्' ख. पाठः.

स्तबकस्तनभारासु पिकालापचटूक्तिषु ।
मन्दानिलमृदुप्रेङ्खत्पल्लवाङ्गुलिपङ्क्तिषु ॥ ४७ ॥

कुसुमस्मितशोभासु माद्यद्भ्रमरवेणिषु ।
मैथिलीपादसञ्चारं भाविनं विदुषीष्विव ॥ ४८ ॥

किरतीषु प्रसूनानि मार्गे मार्गे यथासुखम् ।
लतासु धृतिमातन्वन् निसृष्टार्थसखीष्विव ॥ ४९ ॥

विदधानेषु सविधे मिथः सौहृदभावनाम् ।
विमुखेष्वर्कशशिनोर्विपक्षसुहृदोर्द्वयोः ॥ ५० ॥

एकयोनिषु कासारे कुमुदेष्वम्बुजेषु च ।
गभीरमधुरां वृत्तिं हृदि कुर्वन् व्यवास्थिताम् ॥ ५१ ॥

रिङ्खन्तं पद्मवाटीषु खेलन्तं भृङ्गपङ्क्तिषु ।
आयान्तं सरसो दूरात् सेवमानः समीरणम् ॥ ५२ ॥

आसेदुषः शैलभुवं पक्षपातेन भूयसा ।
ततीर्वितत्य बर्हाणां चन्द्रकान्ता जटा इव ॥ ५३ ॥

अभ्यस्यतः पदन्यासंमुहुरभ्रामि चेतसा ।
निर्विशन् निर्विशङ्केन नीलकण्ठस्य ताण्डवम् ॥ ५४ ॥

एवं संभावयन् वीरः पदन्यासेन तद् वनम् ।
आरादालोकयामास प्रशान्तं कञ्चिदाश्रमम् ॥ ५५ ॥
(कुलकम्)

सौवर्णास्तरवो यत्र प्रवालाङ्कुरपल्लवाः ।
मौक्तिकप्रसवस्मेरा माणिक्यफलशालिनः ॥ ५६ ॥

यत्र हेमलतादोलामध्यासीनाः समूर्च्छनम्[2] ।
अविगीतानि गीतानि गायन्ति वनदेवताः ॥ ५७ ॥

यत्र किन्नरगन्धर्वाः सविद्याधरचारणाः ।
द्वन्द्वीभूय यथाकालं तपोधनमुपासते ॥ ५८ ॥

यत्र स्वविषयद्रव्यव्यञ्जितात्मीयवैभवैः ।
रमते साकमृतुभिः स्वदमानशरासनः ॥ ५९ ॥

---

१ 'संमन्थर', २. 'नाः ।' ख. पाठः.

पयः पय इव स्वादु रजतद्रवनिर्मलम् ।
तटाके यत्र चक्राह्वहंससारसपेशले ॥ ६० ॥

निर्मुक्तभोगविशदाः पवनाशा निराशिषः ।
यत्र द्रुमनिकुञ्जेषु तपस्यन्ति तपस्विनः ॥ ६१ ॥

यत्रौषधिप्रभापूरैर्निरस्तस्य विदूरतः ।
विश्वमप्यश्नुवानस्य नक्तं न तमसो गतिः ॥ ६२ ॥

सर्वातिशायिनं तस्य महिमानं विजानताम् ।
वैमानिकानां मरुतां यत्र नोर्ध्वं प्रवृत्तयः ॥ ६३ ॥

अलक्षितजनिः श्रीमान् सकलेन्द्रियमोहनः ।
पारिजातप्रसूनानां वितन्वानः पराभवम् ॥ ६४ ॥

(पोरी?)मेय इवामेयघनश्रमविनाशनः ।
यत्र जागर्ति सततं कश्चित् परिमलोदयः ॥ ६५ ॥

(युग्मकम्)

तद् वनं नन्दनप्रख्यं मनोनयननन्दनम् ।
आरादालक्ष्य रामस्य बभूवोत्फुल्लमाननम् ॥ ६६ ॥

तत्रोच्चैर्मार्जनागोष्ठीभेदसङ्कुलनोज्ज्वलः ।
धारालस्निग्धगम्भीरः शुश्रुवे मुरवध्वनिः ॥ ६७ ॥

अङ्गहारोच्चलच्चारुहारयष्टिस्वनोद्धुरः ।
षडङ्गाभिनयोदञ्चत्कङ्कणध्वानिबन्धुरः ॥ ६८ ॥

भावानुगुणसङ्क्रान्तसमोपर्यवपाणिकः ।
अकाकुमधुरोद्गारः षड्जादिभिरुपस्कृतः ॥ ६९ ॥

हस्तप्रचारैर्द्वात्रिंशत्प्रकारैर्भावितान्तरः ।
गतिद्वितयसम्भिन्नलयमध्यादिशोभनः ॥ ७० ॥

पादार्पणक्वणद्धेमकिङ्किणीमणिनूपुरः ।
मूर्छनातानविशदः सर्वश्रुतिमनोहरः ॥ ७१ ॥

तत्रैव वापीसलिले निगूढमणिवेश्मनि ।
सततं कश्चिदाकार्णि वर्णाभिव्यक्तसंस्तवः ॥ ७२ ॥

(कुलकम्)

धियाप्यधृष्यं रक्षोभिः पावनेऽत्र तपोवने ।
निरीक्ष्य तापसं कश्चित् पर्यपृच्छत् तदुद्भवम् ॥ ७३ ॥
स धर्मभृन्मुनिस्तस्मै विस्मयस्मेरचेतसे ।
उद्भवं सरसः सर्वमाचचक्षे विचक्षणः ॥ ७४ ॥
अस्त्यभिव्यक्तमहिमा प्रशमो मूर्त्तिमानिव ।
माण्डकर्णिर्मुनिस्तेन तपस्तेपे सुदारुणम् ॥ ७५ ॥
शङ्कमानस्ततस्तस्मात् तपोभङ्गाय वासवः ।
रूपहावधनाः पञ्च प्राहिणोदुत्तमास्त्रियः ॥ ७६ ॥
तास्तु स्रजामिवादाय तामाज्ञां शिरसा विभोः ।
सविभ्रमाः पदं जग्मुर्मुनेः परमयोगिनः ॥ ७७ ॥
स्मितानुयात्र.शिशिरैरीक्षितैर्हृदयङ्गमैः ।
सङ्गीतविद्यया चास्य प्रायतन्त विलोभने ॥ ७८ ॥
ततः प्रवयसा तेन दृशौ काचरतारके ।
उन्मीलयोन्मीलितधिया समदृश्यन्त ताः पुनः ॥ ७९ ॥
सुत्रामप्रहितास्तास्तु स्वपदोच्छेदशङ्कया ।
अमंस्त दिव्यया दृष्ट्या परच्छन्दानुवर्तिनीः ॥ ८० ॥
ता विलोभयितुं प्राप्ताः पाकशासनशासनात् ।
वीक्ष्य मन्युर्न तस्यासीत् सर्वत्र समचेतसः ॥ ८१ ॥
यथा प्रतिनिवर्तेरन्नितो नातः परं पुनः ।
मया कार्यं तथैतावदित्यासीत् तस्य चेतसि ॥ ८२ ॥
अनुमंस्ये न यावद्वस्तावद् रमयतेह माम्[२] ।
पर्यायेण प्रयोक्तव्यं सङ्गीतं प्रीतिहेतवे ॥ ८३ ॥
इति योगीश्वरस्तासु कृत्वा समयमात्मवान् ।
ससर्ज तपसा वापीं दिव्योद्यानाभिवेष्टिताम् ॥ ८४ ॥
निर्ममे निर्ममस्तस्याः क्रोडे मणिमयं गृहम् ।
मृदङ्गरङ्गपिञ्जोलाविपञ्चीतालवेणुमत् ॥ ८५ ॥

१. 'स्म', २. 'भ्र' क. पाठः.

तत् प्रविश्य समं ताभिस्त्रिदशैरपि दुर्लभम् ।
लोकेभ्यो दर्शयामास ज्ञानस्वातन्त्र्यविभ्रमम् ॥ ८६ ॥
निर्विशन् विषयानित्थं योगेनास्थितयौवनः ।
अप्सरोभिः समं ताभिर्माण्डकर्णिस्तपस्यति ॥ ८७ ॥
एतद् दाशरथे! वेश्म सर्वेषामप्यगोचरम् ।
पर्यन्तोद्यानमाश्रित्य सप्तर्षिः पर्युपासते ॥ ८८ ॥
एतन्मणिमयं तस्य गृहमन्तःपुरास्पदम् ।
वन्दस्व मनसा स त्वां श्रेयसा योजयिष्यति ॥ ८९ ॥
इत्थमावेदिते तेन प्रभावे तस्य योगिनः ।
तमेवोद्दिश्य शान्तात्मा साष्टाङ्गं प्रणनाम सः ॥ ९० ॥
तत्राश्रमपदे तस्य नानाविभवशालिनि ।
रममाणे दृशौ हर्तुं नाशक्रोल्लक्ष्मणाग्रजः ॥ ९१ ॥
अनपकृतपुण्येषु तेषु तेष्वाश्रमेषु सः ।
कञ्चित् कालं सुखं नीत्वा सुतीक्ष्णस्याश्रमं ययौ ॥ ९२ ॥
पित्रा दशरथेनेव तेन प्रत्यभिनन्दितः ।
साकेतपुरवासस्य सस्मार रघुनन्दनः ॥ ९३ ॥

इति नियमविधानेष्वप्रमत्तस्य तस्य
प्रसभमृषिकुमारैराहृताभ्यर्हणस्य ।
अनुदिवसमगस्त्यभ्रातुरादेशभाजो
दश दशरथसूनोस्तत्र वर्षाण्यतीयुः ॥ ९४ ॥

इति रघुवीरचरिते द्वितीयः सर्गः ।

---

अथ तृतीयः सर्गः ।

अथैकदा लब्धमनःप्रसादैस्तपोधनैराहितसन्निबन्धः ।
अगस्त्यमाविष्कृतलोकतन्त्रं प्रभावविद् द्रष्टुमियेष रामः ॥ १ ॥

तथेति निश्चित्य स निश्चितार्थो महीपसस्तस्य महेन्द्रवीर्यः ।
प्रहर्षवर्षोद्धुरधीर्महर्षेरुपास्पृशत् पादसरोजरेणुम् ॥ २ ॥

व्यजिज्ञपच्चास्मि सुखोषितोऽहं भवादृशैरभ्युपपद्यमानः ।
अगस्त्यमालोकयितुं वरेण्यं मनः समुत्सर्पति कौतुकेन ॥ ३ ॥

ततो यियासापिशुनं तदुक्तं निशम्य किञ्चिद् विमना इवाभूत् ।
मुनिः स्वयंदृष्टपरावरोऽपि सतां क एव क्षमते वियोगम् ॥ ४ ॥

स तस्य मत्वा व्यवसायमार्यः क्षणं विचिन्त्य क्षपिताहितस्य ।
मृदुस्मितस्मेरमुखस्तमर्थ्यां गिरं बभाषे गिरिराजसारः ॥ ५ ॥

अभीप्सितं यत् तदिहानुमन्ये भवत्प्रियं कर्तुमियं ममास्था ।
इदं तु दूये वत तापसानां धृतिः प्रतिष्ठामपहास्यतीति ॥ ६ ॥

निरस्तनक्तञ्चरभीतिसौख्यं स्वकर्मणा सर्वजनातिगेन ।
तपोवनं राम! भवानियन्तं कालं सनाथीकृतवानिदं नः ॥ ७ ॥

स्वस्त्यस्तु ते वत्स! चिराय कामं राम! प्रयातुं द्रुतमारभस्व ।
तस्याश्रमं येन मुनेरुपेयास्सुखं तमद्योपदिशामि मार्गम् ॥ ८ ॥

इतो विनिष्क्रम्य विविद्रुमौघस्त्वं दक्षिणाशां मनसा गृहाण ।
प्रायेण मार्गः स नरैरगम्यः स्वतो दुरारोहमहामहीध्रः ॥ ९ ॥

वनस्थली तावदितः परस्तात् सपिप्पलीपाककषायिताशा ।
तरक्षुशाखामृगकिन्नराणां प्रायेण सा सञ्चरतामुपैति ॥ १० ॥

ततः परं वारणभग्ननालैः परिष्कृता पुष्करिणी सरोजैः ।
निविश्य तत्तीरलतानिकुञ्जे सहानुगस्त्यक्ष्यसि मार्गखेदम् ॥ ११ ॥

परिस्फुरद्धातुषु गण्डशैलेष्वभिस्रवन्निर्झरनिर्भरेषु ।
प्रवृत्तदानप्रसरावलिप्तां द्रक्ष्यसि माहेन्द्रगजेन्द्रलीलाम् ॥ १२ ॥

उल्लङ्घ्य तत् काननमीक्षितासे नदीं ससङ्कोचघनप्रवाहाम् ।
शाखापथेनोभयकूलभाजां तत्र द्रुमाणां जनतास्तरन्ति ॥ १३ ॥

---

१. 'व', २. 'भि' क. पाठः. ३. 'अतस्तु', ४. 'नित्येन सा' ख. पाठः.
५. 'का' क. पाठः.

अतीत्य चैनामुपनीतवृत्तिः फलैस्तरूणां परिपाकपिङ्गैः ।
गमिष्यसि ग्रावनिवेशभीमामधित्यकां शृङ्गवतस्त्वमद्रेः ॥ १४ ॥

तस्यामवस्थाय ततो मुहूर्तं सुमेरुकूटप्रतिमानभाजि ।
सराष्ट्ररत्नाकरशैलदुर्गां दिशो दशालोकयितुं क्षमं ते ॥ १५ ॥

मनीषया प्राक्प्रकृतां दिशं तामसन्त्यजन्नेव ततोऽवतीर्णः ।
उपत्यकामेष्यसि दर्शनीयां प्रवृत्तनृत्तैः शितिकण्ठसार्थैः ॥ १६ ॥

तमालराजिः कृतमालमिश्रा तत्र प्रभूतप्रसवप्रगल्भा ।
हिरण्मयाकल्पविशेषदृश्या या वैष्णवी मूर्तिरिवैति लक्ष्मीम् ॥ १७ ॥

अग्रे पुनर्वर्षजलप्रणाली वेणीरयोन्मूलितशष्पकूला ।
उपैति सा नाम गुहामगाधां मार्गभ्रमस्तत्र तु राम ! मा भूत् ॥ १८ ॥

वप्रेण यान्ती विरलद्रुमेण प्ररूढशष्पोत्करदंसितेन ।
प्रमोक्ष्यति प्रस्तरचारजातां पादव्यथां मैथिलराजपुत्री ॥ १९ ॥

पथापसव्येन गतिस्ततः स्याद् द्रोणीमथ प्राप्स्यसि पुष्कलाम् ।
हेरम्बकण्ठध्वनिभीमभूमा यत्रोच्चकैर्निर्झरपातघोषः ॥ २० ॥

पृष्ठे विधाय प्रमदोद्वहां तां गन्तासि खेलत्कदलीं वनालीम् ।
स्फीतामतुच्छस्तवकावनम्रैः सन्ध्याभ्रराजीकपिशैः पलाशैः ॥ २१ ॥

नवामृतस्वादुतमैः प्रकामं विनीतखेदो मुचुलिन्दपाकैः ।
वैखानसै[2]र्लूनसमित्कुशानां द्रष्टासि शल्कानि सवल्कलानाम् ॥ २२ ॥

शक्यं न वक्तुं पुनरीक्षमीक्षं प्राप्तासि तस्यावसथं महर्षेः ।
यद्भ्रातृवार्ताप्रतिपत्तिरस्मान् विशेषयत्यन्यतपोधनेभ्यः ॥ २३ ॥

अकृष्टपच्यप्रशमैकधाम्नः किमुच्यते तस्य तपःप्रभावः ।
अवाप हेतुप्रतिपन्नमन्योर्यस्याम्बुराशिः प्रथमाचमत्वम् ॥ २४ ॥

प्रावर्तयत् सद्गुणराजमित्रव्यपेक्षया लोकहितैकनिष्ठः ।
आज्ञामलङ्घ्यां विनियुज्य धात्र्या यो विन्ध्यभूभृत्प्रतिपटकोपशान्तिम् ॥

---

१. 'त्। पथा' ग. पाठः. २. 'सोलून' क. पाठः.

निरर्गलैश्वर्यभुवा मदेन मस्करिचित्रं नहुषं क्षणेन ।
पदाभिषिक्ते सति वृत्रशत्रोरपातयद् भ्रूविकृतिर्यदीया ॥ २६ ॥

स्वचक्षुषा पावकसन्निभेन वातापितापिप्रथमानतेजाः ।
यः श्राद्धिकः प्रादहदिल्वलाख्यं दनुजाधिपं तूलमिवात्तमन्युः ॥ २७ ॥

सम्प्राप्य तस्याश्रुतसिद्धसिद्धेररण्यमारण्यकवासपुण्यम् ।
ध्रुवं रजोवासनया विमुक्तः सद्यः फलं प्राप्स्यसि जन्मनस्त्वम् ॥

तत्राभिवन्द्याखिलदेवतानां स्थानानि दृष्ट्वा कलशप्रसूतिम् ।
आज्ञां पुरस्कृत्य पुनस्तदीयां सुखं नयेथा वनवासशेषम् ॥ २९ ॥

इत्थं मनस्वी गुणवत् तदुक्तं सङ्गृह्य तेन प्रहिताभ्यनुज्ञः ।
कृतानुयात्रः स तपस्विवर्गैर्निष्क्रान्तवानाश्रमतस्तदीयात् ॥ ३० ॥

स वीक्षमाणो विविधान् प्रदेशान् सरांसि चोत्फुल्लकुशेशयानि ।
पतत्रिणां चाभिरुतानि शृण्वन् मार्गं जगाहे मुनिनोपदिष्टम् ॥ ३१ ॥

उदीर्यमाणां वनदेवताभिर्लतानिकुञ्जेषु निषेदुषीभिः ।
लयप्रभेदानुगतामनेकां वनेषु शुश्राव स देववाणीम् ॥ ३२ ॥

स भग्नशाखेषु गजैर्द्रुमेषु निर्यासनिर्यातरसेष्ववस्थाम् ।
अतर्कयद् रामकुठारधारानिकृत्तबाहोः कृतवीर्यसूनोः ॥ ३३ ॥

कदाप्यविज्ञातभियः पुरस्तान्मृगा न तेभ्यः कलयापि विभ्युः ।
निरीक्ष्य नेत्रे जनकात्मजाया ह्रियेव नूनं विपिने निलीनाः ॥ ३४ ॥

विश्रम्य विश्रम्य वनस्पतीनां छायासु मार्गश्रमहारिणीषु ।
आप्याय्यमानः स शिवैः समीरैस्तपोवनाभ्याशभुवं ददर्श ॥ ३५ ॥

स छायया निह्नुतमार्गखेदः स्वसन्निधानेन पवित्रिताशः ।
आसेदिवान् पल्लवताम्रपादः सरः किमप्यस्तगिरिं च भानुः ॥ ३६ ॥

महर्षिशिष्याहृतफुल्लपद्मे निमज्ज्य तस्मिन् नियमं विधाय ।
सौमित्रिसीतासहितोऽथ लेभे मनःप्रसादं मनुवंशकेतुः ॥ ३७ ॥

वियुज्यमानेषु रथाङ्गनाम्नां द्वन्द्वेषु योषित्कुचबन्धुरेषु ।
अमोघवीर्यस्य बभूव मोघा तस्यानुकम्पा मनसस्तदानीम् ॥ ३८ ॥

कस्तूरिकाकर्दमलेपशोभां गात्रेषु जैत्राद्विपतां पुरस्तात् ।
ऊर्ध्वं च बर्हातपवारणत्वं तस्यागमत् सन्तमसावतारः ॥ ३७ ॥

शिवाय लोकस्य शिवानुभावः प्रसज्यमानः प्रसरैर्गुणानाम् ।
समाप्य सान्ध्यं विधिवद् विधानं तमाससादाश्रममश्रमेण ॥ ३८ ॥

यथा यथा विश्वविपत्प्रमाथी तपोनिधेः सन्निधिमाससाद ।
तथा तथा तस्य महेन्द्रकीर्त्तेर्मनः प्रसादप्रवणं बभूव ॥ ३९ ॥

गुणैकबन्धुः प्रगुणप्रसादां तपोभृतां भक्तिभरावनम्रः ।
प्रपन्नरक्षानिरतः प्रपेदे सभां स भानुप्रतिमानुभावः ॥ ४० ॥

स्फुरत्प्रदीपाङ्कुरसन्निकर्षे श्रुतानि शास्त्राण्यनुवाचयन्ती ।
युक्तिक्रमाक्षिप्तसमाहितार्थां प्रत्युद्ययौ तापसजातिरेनम् ॥ ४१ ॥

ततः क्षणेन क्षणदाचराणां हन्तारमालोक्य तमभ्युपेतम् ।
शिष्यः प्रविश्योटजमाचचक्षे समाधिभाजे कलशोद्भवाय ॥ ४२ ॥

निशम्य तस्मात् प्रणिधानदृष्टिस्तं प्राप्तमुद्दीर्णमनोरथाप्तिः ।
तपःसमाधेर्विरमय्य चेतः पर्यङ्कबन्धं शिथिलं वितेने ॥ ४३ ॥

प्रवेशितस्तेन वचोहरेण स्ववीक्षणस्मेरविलोचनेन ।
विभुः सुमित्रासुतमैथिलीभ्यां सार्धं महर्षेश्चरणौ ववन्दे ॥ ४४ ॥

आसीनमन्तेवसतां पदव्यामनामयं चाप्यनुयुज्य धीरः ।
तमूचिवानिन्दुकरावदातश्मश्रुप्रभादन्तुरदन्तकान्तिः ॥ ४५ ॥

स्ववंशविच्छेदभयातुरेण दिष्ट्या भवान् पङ्क्तिरथेन लब्धः ।
दवानलज्वालविलङ्घितेन महीधरेणेव घनाम्बुपातः ॥ ४६ ॥

प्रसन्नतारेन्दु नभः समीराः शिवा निषेव्यौ रविहव्यवाहौ ।
रसाढ्यमम्भः क्षितिरुर्वरा च त्वयि प्ररूढे रघुवंशकन्दे ॥ ४७ ॥

तदा तदा लोकमुखोदितानि श्रुतानि ते वत्स ! दशान्तराणि ।
अपेतदूरव्यवधानरोधं सदा मनश्चक्षुरवेक्षते त्वाम् ॥ ४८ ॥

सुखेन वर्षाणि बहूनि तस्य भ्रातुः सुतीक्ष्णस्य वसन्नुपान्ते ।
अवस्थितस्येह गुणैरुदारैर्ममाप्यजस्रं मुदमातनोषि ॥ ४९ ॥

निरर्गलैश्वर्यभुवा मदेन प्रसक्तचित्तं नहुषं क्षणेन ।
पदान्निमित्ते सति वृत्रशत्रोरपातयद् भ्रूविकृतिर्यदीया ॥ २६ ॥
स्वचक्षुषा पावकसन्निभेन वातापितापिप्रथमानतेजाः ।
यः श्राद्धिकः प्रादहदिल्वलाख्यं द्विजद्विषं तूलमिवात्तमन्युः ॥ २७ ॥
सम्प्राप्य तस्यायुतसिद्धसिद्धेररण्यमारण्यकवासपुण्यम् ।
ध्रुवं रजोवासनया विमुक्तः सद्यः फलं प्राप्स्यसि जन्मनस्त्वम् ॥
तत्राभिवन्द्याखिलदेवतानां स्थानानि दृष्ट्वा कलशप्रसूतिम् ।
आज्ञां पुरस्कृत्य पुनस्तदीयां सुखं नयेथा वनवासशेषम् ॥ २९ ॥
इत्थं मनस्वी गुणवत् तदुक्तं सङ्गृह्य तेन प्रहिताभ्यनुज्ञः ।
कृतानुयात्रः स तपस्विवर्गैर्निष्क्रान्तवानाश्रमतस्तदीयात् ॥ ३० ॥
स वीक्षमाणो विविधान् प्रदेशान् सरांसि चोत्फुल्लकुशेशयानि ।
पतत्रिणां चाभिरुतानि शृण्वन् मार्गं जगाहे मुनिनोपदिष्टम् ॥ ३१ ॥
उदीर्यमाणां वनदेवताभिर्लतानिकुञ्जेषु निषेदुषीभिः ।
लयप्रभेदानुगतामनेकां वनेषु शुश्राव स देववाणीम् ॥ ३२ ॥
स भग्नशाखेषु गजैर्द्रुमेषु निर्यातनिर्यासरसेप्ववस्थाम् ।
अतर्कयद् रामकुठारधारानिकृत्तबाहोः कृतवीर्यसूनोः ॥ ३३ ॥
कदाप्यविज्ञातभियः पुरस्तान्मृगा न तेभ्यः कलयापि बिभ्युः ।
निरीक्ष्य नेत्रे जनकात्मजाया ह्रियेव नूनं विपिने निलीनाः ॥ ३४ ॥
विश्रम्य विश्रम्य वनस्पतीनां छायासु मार्गश्रमहारिणीषु ।
आप्याय्यमानः स शिवैः समीरैस्तपोवनाभ्याशभुवं ददर्श ॥ ३५ ॥
स छायया निह्नुतमार्गखेदः स्वसन्निधानेन पवित्रिताशः ।
आसेदिवान् पल्लवताम्रपादः सरः किमप्यस्तगिरिं च भानुः ॥ ३६ ॥
महर्षिशिष्याहृतफुल्लपद्मे निमज्ज्य तस्मिन् नियमं विधाय ।
सौमित्रिसीतासहितोऽथ लेभे मनःप्रसादं मनुवंशकेतुः ॥ ३७ ॥
वियुज्यमानेषु रथाङ्गनाम्नां द्वन्द्वेषु योषित्कुचबन्धुरेषु ।
अमोघवीर्यस्य बभूव मोघा तस्यानुकम्पा मनसस्तदानीम् ॥ ३८ ॥

कस्तूरिकाकर्दमलेपशोभां गात्रेषु जैत्राद्विपतां पुरस्तात् ।
ऊर्ध्वं च बर्हातपवारणत्वं तस्यागमत् सन्तमसावतारः ॥ ३७ ॥

शिवाय लोकस्य शिवानुभावः प्रसज्यमानः प्रसरैर्गुणानाम् ।
समाप्य सान्ध्यं विधिवद् विधानं तमाससादाश्रममश्रमेण ॥ ३८ ॥

यथा यथा विश्वविपत्प्रमाथी तपोनिधेः सन्निधिमाससाद ।
तथा तथा तस्य महेन्द्रकीर्त्तेर्मनः प्रसादप्रवणं बभूव ॥ ३९ ॥

गुणैकबन्धुः प्रगुणप्रसादां तपोभृतां भक्तिभरावनम्रः ।
प्रपन्नरक्षानिरतः प्रपेदे सभां स भानुप्रतिमानुभावः ॥ ४० ॥

स्फुरत्प्रदीपाङ्कुरसन्निकर्षे श्रुतानि शास्त्राण्यनुवाचयन्ती ।
युक्तिक्रमाक्षिप्तसमाहितार्था प्रत्युद्ययौ तापसजातिरेनम् ॥ ४१ ॥

ततः क्षणेन क्षणदाचराणां हन्तारमालोक्य तमभ्युपेतम् ।
शिष्यः प्रविश्योटजमाचचक्षे समाधिभाजे कलशोद्भवाय ॥ ४२ ॥

निशम्य तस्मात् प्रणिधानदृष्टिस्तं प्राप्तमुद्दीर्णमनोरथाप्तिः ।
तपःसमाधेर्विरमय्य चेतः पर्यङ्कबन्धं शिथिलं वितेने ॥ ४३ ॥

प्रवेशितस्तेन वचोहरेण स्ववीक्षणस्मेरविलोचनेन ।
विभुः सुमित्रासुतमैथिलीभ्यां सार्धं महर्षेश्चरणौ ववन्दे ॥ ४४ ॥

आसीनमन्तेवसतां पदव्यामनामयं चाप्यनुयुज्य धीरः ।
तमूचिवानिन्दुकरावदातश्मश्रुप्रभादन्तुरदन्तकान्तिः ॥ ४५ ॥

स्ववंशविच्छेदभयातुरेण दिष्ट्या भवान् पङ्क्तिरथेन लब्धः ।
दवानलज्वालविलङ्घितेन महीधरेणेव घनाम्बुपातः ॥ ४६ ॥

प्रसन्नतारेन्दु नभः समीराः शिवा निषेव्यौ रविहव्यवाहौ ।
रसाढ्यमम्भः क्षितिरुर्वरा च त्वयि प्ररूढे रघुवंशकन्दे ॥ ४७ ॥

तदा तदा लोकमुखोदितानि श्रुतानि ते वत्स ! दशान्तराणि ।
अपेतदूरव्यवधानरोधं सदा मनश्चक्षुरवेक्षते त्वाम् ॥ ४८ ॥

सुखेन वर्षाणि बहूनि तस्य भ्रातुः सुतीक्ष्णस्य वसन्नुपान्ते ।
अवस्थितस्येह गुणैरुदारैर्ममाप्यजस्रं मुदमातनोषि ॥ ४९ ॥

यथा पितुस्त्वय्यतिकृच्छ्रलब्धे रतिस्तथा तात! ममाप्यमेया ।
अवस्थितेष्वेवममीषु तावज्जनेषु ते जीवति रामतातः ॥ ५० ॥

त्वयि श्रुते राम! वनं प्रविष्टे त्वदर्थमित्येभिरुपाहृतानि ।
रसाधिकान्येव बहूनि नूनं फलानि नः पर्युषितान्यभूवन् ॥ ५१ ॥

पितुर्नियोगेन वनं विविश्वानितोमुखं प्राप्स्यति रामभद्रः ।
मत्वेति हृद्यानि फलानि मूलान्ययातयामानि मयाहृतानि ॥ ५२ ॥

निर्वापितः सूनृतया गिरेत्थं खर्वेतरज्ञानधनेन तेन ।
आसक्तचेता नियमव्रतेषु मासत्रयीमत्र वसन्नरंस्त ॥ ५३ ॥

मुनिस्तमन्येद्युरुदात्तसत्त्वं त्रैकालिकज्ञाननिधिर्विचिन्त्य ।
शिरस्युपाघ्राय जटापिशङ्गे जगाद वाचं जगतां शरण्यम् ॥ ५४ ॥

तवायमस्मत्सविधे निवासः शश्वत् परं रोचत एव मह्यम् ।
तथाप्यहं त्वामधिकृत्य वक्ष्याम्यल्पावशिष्टा वनवासवेला ॥ ५५ ॥

अस्मादवाचीं दिशमाददानः प्रस्थाय सव्येन मधूकजातम् ।
छायानिषण्णस्वपदृश्ययूथं न्यग्रोधमग्रे पुनराश्रयेथाः ॥ ५६ ॥

तमप्यतिक्रम्य विशालशाखं क्षुद्रस्य शैलस्य पुनः पुरस्तात्[1] ।
प्रेक्षिष्यसे पञ्चवटीति नाम्ना ख्यातां ततः कामपि पुण्यभूमिम् ॥

विधाय तस्यामथ पर्णशालां छन्देन वृन्दारकवद् वसन्तम् ।
त्वां सेवितारः कृतपद्ममैत्रा गोदावरीवीचिभिदः समीराः ॥ ५८ ॥

उद्भाविता सा किल गौतमेन ब्रह्मत्विषा ब्रह्मगिरेः पतन्ती ।
सर्वात्मना राम! निषेव्यमाणा पुंसां कृतार्थीकुरुते मनांसि ॥ ५९ ॥

तरङ्गरङ्गत्कलहंसमाला प्रसाधिता तीरवनप्रसूनैः ।
कर्पूरपूरच्छविसैकता सा समुद्रगा सञ्जनयेन्मुदं वः ॥ ६० ॥

तत्र स्थितः पावन! पालयन् नः सत्यव्रतत्वं च पितुर्यथावत् ।
अनन्यसाधारणभूरिकर्मा जन्मेदमुच्चैः सफलीकुरुष्व ॥ ६१ ॥

---

१. 'प' ख. पाठः.

विपन्त्रियामासमयप्रभाते जाते दुरापे समयावसाने ।
सभ्रातृदारप्रकृतिः सुखानि निर्वेक्ष्यसि प्राप्य शुभामयोध्याम्[1] ॥

इदं धनुर्वैष्णवमप्रधृष्यं जैत्रं गृहाणेषुधिखड्गयुक्तम् ।
अनेन लोकस्थितिकर्महेतोर्नारायणः प्रागजयत् सुरारीन् ॥ ६३ ॥

यदास्ति सौमित्रिगतं धनुः स्यादेतत्समं तच्छरधी च तस्य ।
रणेषु बाणैः परिपूर्यमाणौ खड्गश्च वज्रादपि सारधारः ॥ ६४ ॥

दिने दिने तामवतीर्य सिन्धुं स्नान्ती भवद्योगविलीनशोका ।
सीता गिरिप्रान्तरखेदभाजोरेषा विषादं पदयोर्जहातु ॥ ६५ ॥

प्रयास्यतस्ते शिवमस्तु मार्गे भूयात् पुनर्दर्शनमेवमेव ।
अकिञ्चनां तापसजातिमेनामवेहि तात! त्वदधीनरक्षाम् ॥ ६६ ॥

तेनातिसृष्टान् परिगृह्य हेतीन् प्रीतस्तदाज्ञां हृदये निधाय ।
आरण्यकापाङ्गकृतानुयात्रः प्रातिष्ठत प्राणभृतां विनेता ॥ ६७ ॥

तथा कृतस्वस्त्ययनः स तस्माद् विनिर्गतः प्रस्तरमाश्रयन्तम् ।
शरीरबन्धेन महत्तमेन भयानकं गृध्रपतिं ददर्श ॥ ६८ ॥

रक्षोधियालक्ष्य निहन्तुकाममात्मानमेनं कृतसूनृतोक्तिः ।
अनूरुजत्वं पितृमित्रतां[2] च स्वनाम गोत्रं च समाचचक्षे ॥ ६९ ॥

उवाच भूयोऽपि वसन्निहाहं सम्पातिना पूर्वभुवा नियुक्तः ।
अरण्यवासे तव राम! साह्यं करोमि विष्णोरिव वैनतेयः ॥ ७० ॥

इत्यारुणिव्याहृतमादरेण श्रुत्वा नवीकृत्य पितुश्च सख्यम् ।
गत्वान्तरं राक्षसकुञ्जरालीपञ्चाननः पञ्चवटीमवाप ॥ ७१ ॥

स तत्र कर्णानुगुणप्रवृत्तैः शृङ्गारितान् क्वापि रुतैः खगानाम् ।
विचित्रनानामृगसन्निपातान् क्वचित् क्वचित् ताण्डवितान् मयूरैः ॥ ७२ ॥

पुष्प्यद्घनच्छायमहावनान्तैः क्वचित् परिस्तोमितहस्तिशोभान् ।
क्वचिच्च भूभृत्कटकान्तरेषु सचित्रलेपानिव धातुरागैः ॥ ७३ ॥

नवप्रवालप्रतिमैः प्रवालैः क्वचित् तरूणां कृतसान्ध्यकान्तीन् ।
विलोकयामास विलोभितात्मा स्वाशंसिताद्[3] रम्यतरान् प्रदेशान् ॥ ७४ ॥

(कुलकम्)

---

१. 'शिवाम' ख. पाठः. २. 'मातुः स्व' क. पाठः. ३. 'दभ्यधिकान्' ख. पाठः.

सभित्कुशैलाफलपिप्पलीनां समृद्धियोगादतिसृष्टकामा ।
निश्चूषयामास मनस्तदीयं सवेणुतुम्बी विपिनान्तभूमिः ॥ ७५ ॥
प्रसक्तवानीरलतागृहाभिस्तटस्थलीभिर्ग्रथनं गतेषु ।
सुखावतारा पुलिनोच्चयेषु गोदावरी पुण्यजला व्यलोकि ॥ ७६ ॥
स्फुरद्भिरूर्मिप्रसरेषु भानोर्मरीचिभिर्लब्धतरावगाहैः ।
आबिभ्रतीव व्यतिषज्यमानां पारिप्लवां काञ्चनजालमालाम् ॥ ७७ ॥
शैलस्तनोपान्तमुपाश्रयन्ती पाथःकणैर्व्यञ्जितमौक्तिकश्रीः ।
उदन्वदम्भःपरिधानलम्बा वसुन्धराया इव हारयष्टिः ॥ ७८ ॥
परिस्फुरत्केसरराजिराजत्सिताविन्दप्रतिरूपरूपैः ।
दुग्धावदातद्युतिभिस्तरद्भिर्मरालयूथैरविशेषितोर्मिः ॥ ७९ ॥
महीध्रपादान्तरगोचरेषु स्खलत्प्रचारा विषमोपलेषु ।
महोर्मिभिर्वायुवशोपपन्नैः सखेदनिःश्वासमिवाचरन्ती ॥ ८० ॥
दृष्ट्वा सपत्नीः सरितोऽभियुक्ताः पत्या प्रभूतोत्कलिकानुबन्धा ।
द्रुतं महागोत्रभवा रुषेव स्फुरत्तरङ्गाधरमापतन्ती ॥ ८१ ॥
सा वल्गुवल्गच्छफराभिरामा शिवा पयोभिः स्फटिकप्रकाशैः ।
समुन्मिषत्पद्मपरागताम्रा बभूव तस्याशयकार्मणाय ॥ ८२ ॥
ततः समन्तादवलोक्य धीरस्तस्याः शुभे रोधसि रोचनीये ।
स्मृत्वा विधिं वेश्मनि पर्णशालां कर्तुं सुमित्रातनयं न्ययुङ्क्त ॥ ८३ ॥
स देहलीं मृत्तिकयाश्मवत्या समन्ततः श्लक्ष्णसमानलिन्दान् ।
प्रागुत्तराशाप्रवणं च शालासंस्थानमानं परिवृत्त्यपेतम् ॥ ८४ ॥
अधिच्छदं शैलशरप्रकाण्डैर्वंशास्थितिं वंशवरेण भूयः ।
पर्यन्तभित्तिं तृणपूलकाष्ठैरकल्पयत् कल्पविदां पुरोगः ॥ ८५ ॥
(युग्मकम्)

यथाविधानं स विधाय तस्यां बलिं बलिद्वेषिसमानतेजाः ।
प्रणम्य सीतापतये स तस्मै निवेदयामास च तां सुजाताम् ॥ ८६ ॥
सन्दानिता वेत्रलतावितानैर्मृदुप्रवालास्तरवल्कशय्या ।
तेनोपनीता रघुराजसूनोर्हृदि प्रहर्षं प्रथयाञ्चकार ॥ ८७ ॥

---

१. 'न्त' ख. पाठः.

अनुष्ठितस्नानविधिः स नद्यां सौमित्रिणा हारितवन्यवृत्तिः ।
प्रियाणि कुर्वन् जनकात्मजाया निनाय कालं कमपि प्रतीतः ॥ ८८ ॥

महोपलतटस्खलत्प्रलघुवारिगोदावरी-
तरङ्गसुहृदम्बुजप्रकरगन्धसर्वङ्कषैः ।
मरुद्भिरुपसेवितः सवितृवंशचूडामणिः
शिवामशिवभेदकः स्फुटममंस्त तत्र स्थितिम् ॥ ८९ ॥

इति रघुवीरचरिते तृतीयः सर्गः ।

---

## अथ चतुर्थः सर्गः ।

तत्र पर्णभवने वसन् प्रियामाकलय्य कुसुमग्रहोत्सुकाम् ।
लक्ष्मणेन च तया च संयुतः[1] प्राविशत् परिसराश्रयं वनम् ॥ १ ॥
कौतुकस्तिमितचारुलोचनव्यञ्जितप्रचुरचित्तसम्मदाः ।
तानुपेत्य वनदेवताश्चिरं काननान्तरगता व्यलोकयन् ॥ २ ॥
उद्गतं मुकुलितं विकस्वरं क्षीबभृङ्गमुखरं मधुद्रवैः ।
प्रेक्षते स्म कुसुमं महीरुहां जानकी जनितलोचनोत्सवम् ॥ ३ ॥
दर्शयन्त्य[2]निजहस्तगोचरां राघवाय यशसां प्रसूतये ।
सुग्रहां कुसुमपङ्क्तिमादराद् गृह्णती विचरति स्म भामिनी ॥ ४ ॥
कूजितैर्मुखरिताः पतत्रिणां मेदुरार्द्रमधुगन्धनिर्भराः ।
रामभद्रदयिताविलोभने प्रायतन्त विपिनान्तभूमयः ॥ ५ ॥
स्वैरमत्र विनियुज्य लोलतामातपे भवति यौवनोन्मुखे ।
लक्ष्मणाग्रजमनुव्रता सती गौतमीमभिषवाय सा ययौ ॥ ६ ॥
पद्मकेसरकषायितोदकां तां विलोक्य तरलोर्मिमालिनीम् ।
लोकलोचनचकोरचन्द्रिका सा निनाय हृदयं महोत्सवम् ॥ ७ ॥
राघवस्तु दिनमध्यगोचरं संविधाय विधिना विधिं विभुः ।
आतपप्रसरकर्शितां प्रियामात्तबन्धुरनयत् स्वमाश्रमम् ॥ ८ ॥

---

१. 'सोऽन्वितः' ख. २. 'वा', ३. 'त्य' क. पाठः.

समित्कुशैलाफलपिप्पलीनां समृद्धियोगादतिसृष्टकामा ।
निश्चूषयामास मनस्तदीयं सवेणुतुम्बी विपिनान्तभूमिः ॥ ७५ ॥
प्रसक्तवानीरलतागृहाभिस्तटस्थलीभिर्ग्रथनं गतेषु ।
सुखावतारा पुलिनोच्चयेषु गोदावरी पुण्यजला व्यलोकि ॥ ७६ ॥
स्फुरद्भिरूर्मिप्रसरेषु भानोर्मरीचिभिर्लब्धतरावगाहैः ।
आबिभ्रतीव व्यतिषज्यमानां पारिप्लवां काञ्चनजालमालाम् ॥ ७७ ॥
शैलस्तनोपान्तमुपाश्रयन्ती पाथःकणैर्व्यञ्जितमौक्तिकश्रीः ।
उदन्वदम्भःपरिधानलब्धा वसुन्धराया इव हारयष्टिः ॥ ७८ ॥
परिस्फुरत्केसरराजिराजत्सितारविन्दप्रतिरूपरूपैः ।
दुग्धावदातद्युतिभिस्तरद्भिर्मरालयूथैरविशेषितोर्मिः ॥ ७९ ॥
महीध्रपादान्तरगोचरेषु स्खलत्प्रचारा विषमोपलेषु ।
महोर्मिभिर्वायुवशोपपन्नैः सखेदनिःश्वासमिवाचरन्ती ॥ ८० ॥
दृष्ट्वा सपत्नीः सरितोऽभियुक्ताः पत्या प्रभूतोत्कलिकानुबन्धा ।
द्रुतं महागोत्रभवा रुषेव स्फुरत्तरङ्गाधरमापतन्ती ॥ ८१ ॥
सा वल्गुवल्गच्छफराभिरामा शिवा पयोभिः स्फटिकप्रकाशैः ।
समुन्मिषत्पद्मपरागताम्रा बभूव तस्याशयकार्मणाय ॥ ८२ ॥
ततः समन्तादवलोक्य धीरस्तस्याः शुभे रोधसि रोचनीये ।
स्मृत्वा विधिं वेश्मनि पर्णशालां कर्तुं सुमित्रातनयं न्ययुङ्क्त ॥ ८३ ॥
स देहलीं मृत्तिकयाऽमवत्या समन्ततः श्लक्ष्णसमानलिन्दान् ।
प्रागुत्तराशाप्रवणं च शालासंस्थानमानं परिवृत्त्यपेतम् ॥ ८४ ॥
अधिच्छदं शैलशरप्रकाण्डैर्वंशस्थितिं वंशवरेण भूयः ।
पर्यन्तभित्तिं तृणपूलकाष्ठैरकल्पयत् कल्पविदां पुरोगः ॥ ८५ ॥
(युग्मकम्)

यथाविधानं स विधाय तस्यां बालिं बलिद्वेषिसमानतेजाः ।
प्रणम्य सीतापतये स तस्मै निवेदयामास च तां सुजाताम् ॥ ८६ ॥
सन्दानिता वेत्रलतावितानैर्मृदुप्रवालास्तरवल्कशय्या ।
तेनोपनीता रघुराजसूनोर्हृदि प्रहर्षं प्रथयाञ्चकार ॥ ८७ ॥

---

१. 'न्त' ख. पाठः.

अनुष्ठितस्नानविधिः स नद्यां सौमित्रिणा हारितवन्यवृत्तिः ।
प्रियाणि कुर्वन् जनकात्मजाया निनाय कालं कमपि प्रतीतः ॥ ८८ ॥

महोपलतटस्खलत्प्रलघुवारिगोदावरी-
तरङ्गसुहृदम्बुजप्रकरगन्धसर्वङ्कषैः ।
मरुद्भिरुपसेवितः सवितृवंशचूडामणिः
शिवामशिवभेदकः स्फुटममंस्त तत्र स्थितिम् ॥ ८९ ॥

इति रघुवीरचरिते तृतीयः सर्गः ।

---

## अथ चतुर्थः सर्गः ।

तत्र पर्णभवने वसन् प्रियामाकलय्य कुसुमग्रहोत्सुकाम् ।
लक्ष्मणेन च तया च संयुतः[1] प्राविशत् परिसराश्रयं वनम् ॥ १ ॥

कौतुकस्तिमितचारुलोचनव्यञ्जितप्रचुरचित्तसम्मदाः ।
तानुपेत्य वनदेवताश्चिरं काननान्तरगता व्यलोकयन् ॥ २ ॥

उद्गतं मुकुलितं विकस्वरं क्षीबभृङ्गमुखरं मधुद्रवैः ।
प्रेक्षते स्म कुसुमं महीरुहां जानकी जनितलोचनोत्सवम्[2] ॥ ३ ॥

दर्शयन्त्य[3]निजहस्तगोचरां राघवाय यशसां प्रसूतये ।
सुग्रहां कुसुमपङ्क्तिमादराद् गृह्णती विचरति स्म भामिनी ॥ ४ ॥

कूजितैर्मुखरिताः पतत्रिणां मेदुरार्द्रमधुगन्धनिर्भराः ।
रामभद्रदयिताविलोभने प्रायतन्त विपिनान्तभूमयः ॥ ५ ॥

स्वैरमत्र विनियुज्य लोलतामातपे भवति यौवनोन्मुखे ।
लक्ष्मणाग्रजमनुव्रता सती गौतमीमभिपत्राय सा ययौ ॥ ६ ॥

पद्मकेसरकषायितोदकां तां विलोक्य तरलोर्मिमालिनीम् ।
लोकलोचनचकोरचन्द्रिका सा निनाय हृदयं महोत्सवम् ॥ ७ ॥

राघवस्तु दिनमध्यगोचरं संविधाय विधिना विधिं विभुः ।
आतपप्रसरकर्शितां प्रियामात्तबन्धुरनयत् स्वमाश्रमम् ॥ ८ ॥

---

१. 'सोऽन्वितः' ख. २. 'वा', ३. 'त्य' क. पाठः.

प्राप्य पर्णभवनं भवोपमः स्वादुमूलफलहारितश्रमाम् ।
सायमायतविलोचनामिति व्याजहार सरिदन्तिकस्थितैः ॥ ९ ॥

उन्मिषत्कुसुमचूतचम्पक(स्फा?स्वै)रवासावि(रवी?रुवा)णषट्पदः ।
सौरभोपचितचैत्रमारुतः कस्य नाम समयोऽयमप्रियः ॥ १० ॥

खेलति भ्रमरपङ्क्तिरुन्मदा पङ्कजेषु मधुगन्धबन्धुषु ।
काननानि सुमनोभिरुज्ज्वलान्येति वायुरुपसेवनीयताम् ॥ ११ ॥

अंसभूविनिहितेक्षुकार्मुकः स्वैरतश्चरति पुष्पसायकः ।
उद्गमन्ति मदिराक्षि! कोकिलाः पञ्चमं जितविपञ्चिनिःस्वनाः ॥ १२ ॥

इन्दुरुद्गिरति चन्द्रिकामृतं सौरभं सृजति कैरवाकरः ।
स्वातिवर्त्मसुविभक्तमम्बरं भूषयन्ति रजनीषु तारकाः ॥ १३ ॥

न स्मरत्यमलवारिसेवया मानसस्य कलहंससंहतिः ।
लीलयन्ति लहरीषु सारसा जागृतश्च मधुमाधवावुभौ ॥ १४ ॥

कौमुदीपरिचयेन तुन्दिलाः सम्पतन्ति विवशं चकोरकाः ।
रत्यनेकरसभाजमीदृशं कालमेनमवधारयाशये ॥ १५ ॥

अम्बरादवतरत्यवाङ्मुखे स्यन्दने झटिति सर्पितारुणे ।
पश्य नूनमवपातशङ्कया कूबराग्रमवलम्बते रविः ॥ १६ ॥

अस्तशैलशिखरावलम्बिना पद्मिनीसहचरेण तेजसा ।
कल्प्यते निजरुचा दिशां मुखेष्वद्भुता घुसृणपङ्कचर्चना ॥ १७ ॥

अस्ति कालगतिरित्यविप्लवा काचिदिन्दुमुखि! यद् दिवाकरः ।
तर्पयन्नपि जगद् वसूच्चयैः स्वां विपत्तिमपनेतुमक्षमः ॥ १८ ॥

संहृतांशुविभवः सरित्पतेरम्भसि प्रपतने कृतोद्यमः ।
एष भूषणमणिर्नभोभुवस्तावदावहति नेत्रगम्यताम् ॥ १९ ॥

पश्य पद्ममुखि! पाथसां निधावर्धमग्नमहिमांशुमण्डलम् ।
यस्य रश्मिनिवहः परापतन् हेमसेतुरिति भाति साम्प्रतम् ॥ २० ॥

---

१. 'सारम्', २. 'ति:' ख. पाठः. ३. 'तन्द्रियाः स' क. पाठः.

चञ्चुसम्भृतसरोजकेसरं चुम्बतोः प्रणयबन्धमन्थरम् ।
दिष्टविप्रकृतयो रथाङ्गयोः किं वदामि हतकं दशान्तरम् ॥ २१ ॥

अस्तमेति सविता हुताशने सङ्क्रमय्य महिमानमात्मनः ।
चक्रवाकहृदयेषु निक्षिपन्[1] पावकं च निजकान्तगोचरम् ॥ २२ ॥

भास्करस्य पदवीं प्रवत्स्यतः सानुतापमनुसृत्य कान्तया ।
सङ्कुचत्कमलवक्त्रशोच्यया सन्ध्यया निववृतेऽनुरक्तया ॥ २३ ॥

लीनमप्यचलगह्वरोदरेष्वेतदन्धतमसं दिवा पुनः ।
आगते स्वसमये निरन्तरं पश्य विश्वमुपरुध्य वर्तते[2] ॥ २४ ॥

नन्दिहस्तहतचारुपुष्करध्वानसन्निहितदेवतागणः ।
सान्ध्यताण्डवविधौ विषज्जते पार्वणेन्दुमुखि! पार्वतीपतिः ॥ २५ ॥

राजसूतिमचिरेण भाविनीं व्यञ्जयद् विहितनेत्रकौतुकम्[3] ।
पश्य तावदमरप्रभोर्दिशः पाण्डिमानमवलम्बते मुखम् ॥ २६ ॥

ताम्रकान्तिरुदयक्षमाधरे सामिदर्शितवपुः सतां पतिः ।
एष पोषयति कुङ्कुमच्छटालीढ[4]ताविकललाटविभ्रमम् ॥ २७ ॥

ज्योत्स्नया जगदपि प्रसाधयन् बोधयन्नपि च कैरवाकरम् ।
कालयन्नपि तमांसि चन्द्रमाः स्वं कलङ्कमपमार्ष्टुमप्रभुः ॥ २८ ॥

एवमाकलितवाङ्निबन्धनस्तां प्रति प्रियगुणां प्रियंवदः ।
गौतमीपयसि तत्र वाग्यतः कर्म सान्ध्यमनुतस्थिवान् पुनः ॥ २९ ॥

तं तथा नियमभाजमेकदा नालमात्रपरिशेषिताम्बुजः ।
आत्मवैभवमृतुर्विभावयन् प्राप निस्तुषतुषारभूषणः ॥ ३० ॥

ग्रस्तदीधितिबलः प्रसर्पिणा तत्र तत्र तुहिनेन भूयसा ।
लक्ष्यते स्म दिवि हैमनो रविः पूर्णचन्द्र इव सौम्यदर्शनः ॥ ३१ ॥

ताण्डवभ्रमिविधायिधूर्जटिक्षिप्तभूरिभसितानुकारिभिः ।
अन्वभावि हिमविप्रुषां चयैर्व्योम्नि शुभ्रशरदभ्रविभ्रमः ॥ ३२ ॥

---

१. 'त्रेनमेष नि' ख. पाठः. २. 'तिष्ठते', ३. 'कात्', ४. 'न' क. पाठः.

शीतशृङ्खलितशब्दसंविदां सन्निकर्षमुपसेदुषामपि ।
नेत्ररोधिनि हिमे परस्परं जज्ञिरे न मिथुनानि पत्रिणाम् ॥ ३३ ॥

मूर्छतीति समये तथाविधे राघवस्य तरुवल्कवाससः ।
शीतशान्तिरुदपादि भूयसा जानकीकुचसरोरुहोष्मणा ॥ ३४ ॥

तत्र कापि मलिना निशाचरी तं प्रदेशमगमद् यदृच्छया ।
रावणस्य भगिनी भुजाबलक्षिप्तमर्त्यसुरदैत्यतेजसः ॥ ३५ ॥

स्निग्धपिङ्गजटमुग्रमूर्धजा पद्मलोचनमलातलोचना ।
तुङ्गघोणमवनम्रनासिका मङ्गलाङ्गमशुभावलोकना ॥ ३६ ॥

मुष्टिमेयतनुमध्यसुन्दरं तुन्दिला शिवगिरं शिवारुता ।
पद्मचारुकरपादपल्लवं तालखण्डपरुषाङ्घ्रिभीषणा ॥ ३७ ॥

शिञ्जिनीकषणरञ्जिताङ्गुलिं शोणिताक्तनखराङ्कुशोल्बणा ।
साधुचेष्टितमसाधुकारिणी सा ददर्श तमनङ्गबाधिता ॥ ३८ ॥

नागलोकजयहेतवे गतं या पतिं रणविलम्बितागमम् ।
पन्नगीषु रतिशङ्कया किल प्रापयत् कबलभावमीर्ष्यया ॥ ३९ ॥

ऋक्षकासरमृगेन्द्रदन्तिनः क्षुद्रशान्मुखबिलप्रवेशिताः ।
साधु यज्जठरगाः परस्परं कुर्वते स्म कलहायमानताम् ॥ ४० ॥

धूमधूम्रतनुकान्तिराबभौ या हि तापसकपालमालिनी ।
यातुधानकुलनाशसूचनी कालरात्रिरिव भीमदर्शना ॥ ४१ ॥

तत्र शूर्पणखया तया विभोः कान्तिसारपरिवेषितं वपुः ।
वीक्ष्य विश्वकरणप्रमाथिनी लभ्यते स्म हृदि कापि विक्रिया ॥ ४२ ॥

अम्बरीषसदृशा दृशा विभुं वीक्ष्य वीक्ष्य परिरब्धभूरुहा ।
तद्धिया रतिमवाप तत्र सा कल्पना हि कुरुते तदात्मताम् ॥ ४३ ॥

छद्मकञ्चुकितभीषणाकृतिर्निम्नगेव जलगूढनक्रका ।
सा पचेलिमगुणप्रसाधनं वायसीव कलहंसमासदत् ॥ ४४ ॥

मन्मथाभिहतिविह्वलाक्षरं व्याहरच्च निकषावतस्थुषी ।
जानकीपतिममर्षरोपितभ्रूविकारपरुषीकृतानना ॥ ४५ ॥

---

१. 'लं' ख. पाठः. २. 'ष्टि' क. पाठः.

स प्रभुः क च गभीरतापदं तादृशां क वचसां प्रवृत्तयः।
प्रायशो मदनरूढचेतसां न क्षमाक्षममवेक्षते मनः ॥ ४६ ॥

कस्त्वमत्र विपिने जटाधरश्चारुचीरपरिधानसंवृतः।
अन्वितः प्रमदयानुरक्तया स्वैरमाचरितधर्मदूषणः ॥ ४७ ॥

द्वन्द्वभावमवमुच्य दूरतः सर्वतः समदृशां तपस्यताम्।
बन्धहेतुषु वधूषु तादृशां सन्निधिं न वितनोति मानसम् ॥ ४८ ॥

पत्युरन्तिकमुपेयुषी सदा भक्तितस्तदुपनीतसंविधा।
क्लेशनिस्सहतनुः प्रियंवदा सा वधूषु गणिकेति गण्यते ॥ ४९ ॥

भर्तुरर्थनिरतां सहिष्णुतां गेहकर्मसु परं वितन्वतीम्।
अर्थधर्मविधिषु प्रबोधिनीमामनन्ति गृहिणीं पुराविदः ॥ ५० ॥

काननादृषिसुरस्वधाभुजामर्हणाय फलमूलवर्हिषाम्।
संहतीरुपनयन्त्यहर्निशं त्वामहं परिचराम्यनुव्रता ॥ ५१ ॥

त्वामनर्घगुण! दिष्टदर्शितं वीक्ष्य विस्मयगता पतिं वृणे।
त्यक्तमानुषसुरासुरादरा नान्यमेत्य रमते मतिर्मम ॥ ५२ ॥

निर्गुणां स्त्रियमिमां विमुञ्चता मय्यनुग्रहदृशं वितन्वता।
कामवर्त्म विशता यथासुखं दीर्घमायुरुपयुज्यतां त्वया ॥ ५३ ॥

इत्यनङ्गहतचित्तया तया वाशितानि विहितानि शृण्वता।
अभ्यधायि रघुराजसूनुना सस्मिताननमगाधचेतसा ॥ ४ ॥

युक्तमेतदिह यद् ब्रवीषि मां कस्त्यजत्यभिसृतां स्वयं वधूम्।
अप्यहं प्रथमसम्भृतामिमां[3] त्वत्कृते न परिहातुमुत्सहे ॥ ५५ ॥

मत्सरेण दधतीमयुक्ततां सर्वकर्मसु जनः सचेतनः।
कुण्ठतां सुखपथे वितन्वतीमाद्रियेत बहुदारतां कथम् ॥ ५६ ॥

भद्रमस्तु तव वाञ्छितं वृथा मास्म भूच्च मनसा पतिंवरे!।
प्राप्य सुन्दरि! वृणीष्व लक्ष्मणं नासिकाक्षतिमसौ विधास्यते ॥ ५७ ॥

शृण्वती गदितमित्यपत्रपा लक्ष्मणाय निजमीप्सितं जगौ।
आशु तेन च निषिद्धसङ्गमा राममेव पुनरप्युपागमदत् ॥ ५८ ॥

---

१. 'तिवेलया', २. 'पाशम' क. पाठः. ३. 'तां प्रियां त्व' ख. पाठः.

रामलक्ष्मणकृते गतागतं सा विधाय बहुशः स्मरोद्धुता ।
रोषवेगपरुषीकृतानना राक्षसी स्वमहिमानमानशे ॥ ५९ ॥
सत्वरं भुजगृहीतलक्ष्मणा व्योममार्गमवगाहते स्म सा ।
कर्णनासमसिना तदीयमप्युच्चकर्त स विकर्तनोपमः ॥ ६० ॥
अप्रमेयधृतिविक्रमौजसा तेन सा धृतरुषा विरूपिता ।
त्रासितद्विरदसिंहसंहतिः क्रन्दितैर्विलुठति स्म भूतले ॥ ६१ ॥
निर्गतां व्रणमुखादसृक्स्रुतिं धातुताम्ररुचिनिर्झरोपमाम् ।
उद्धृतोष्ठपथवाहितां मुहुः प्रापयद् वदनगह्वरान्तरम् ॥ ६२ ॥

विरूपिततराकृतिः प्रसभमेव नक्तंचरी
तथा विरुदती भृशं प्रलयमेघभीमस्वनम् ।
अशेषजनलोचनप्रतिगृहीतलावण्ययो-
स्तयोरुपरि सम्भृतां मदनवश्यतां नात्यजत् ॥ ६३ ॥

ततोऽपसृत्य रंहसा विरुग्णशैलकानना ।
सुरासुरप्रमाथिनं खरं जगाम चेतसा ॥ ६४ ॥

इति रघुवीरचरिते चतुर्थः सर्गः ।

---

## अथ पञ्चमः सर्गः ।

अथाखिलक्षेमविधानदक्षस्तां कृत्तनासाश्रवणां विधाय ।
गोदावरीवारिकृतावगाहः सौमित्रिरिक्ष्वाकुवरं प्रपेदे ॥ १ ॥
इत्थं प्रवृत्तेऽभिनवे विरोधे निशाचराणामतुलानुभावौ ।
तौ भ्रातरौ कर्मसु लब्धवर्णौ बभूवतुस्तत्र कृतावधानौ ॥ २ ॥
तथा जगत्पालनजागरूके सलक्ष्मणे तस्थुषि रामभद्रे[1] ।
खरं जनस्थानगतं समेत्य स्वामापदं शूर्पणखा शशंसे[2] ॥ ३ ॥
ततस्तथाभूतदशान्तरां तां निरीक्षमाणः स समग्रतेजाः ।
पयोधिरौर्वाग्निशिखामिवान्तर्मनस्यपारां रुषमाजहार ॥ ४ ॥
अभूच्च दुर्दर्शममर्षवह्निस्फुरत्स्फुलिङ्गाकृतिलोचनस्य ।
दाक्षायणीनाशविवृद्धमन्योः पत्युः पशूनामिव तस्य रूपम् ॥ ५ ॥

---

१. 'ति', २. 'स' क. पाठः.

चराचरस्य प्रलयं चिकीर्षोरमर्षिताशीविषभोगभीमः ।
तस्यैकबाहुर्धनुरालम्बे युगावसानाशनिभीमघोषम् ॥ ६ ॥

हस्तोऽपरस्तस्य जगत्प्रमाथी नखांशुकिर्मीरितपत्रशोभम् ।
शिलीमुखं प्राणहरं परेषां विषं महानाग इवाजहार ॥ ७ ॥

ततस्त्रिमूर्धं रणमूर्ध्न्यजेयं स दूषणं दूषितसत्पथं च ।
नियुज्य नेतुं पृतनां युयुत्सुः सुकल्पितं स्यन्दनमारुरोह ॥ ८ ॥

समग्रतेजस्तनुरुत्स्खलन्ती रिपुप्रयुक्तास्त्रकिरीटकेषु ।
उरःस्थलप्राङ्गणमेत्य तस्य स्वैरं समक्रीडत वीरलक्ष्मीः ॥ ९ ॥

कल्पक्षयोद्धृत्तकपालपाणिप्रयुक्तहुंकाररवप्रचण्डः ।
पदं द्वितीयं परमस्य पुंसस्तद्यानतूर्यध्वनिरावचार ॥ १० ॥

सेना जगज्जीवनहारिणी सा यियासतस्तस्य पुरः प्रतस्थे ।
प्रमुष्णती सद्गुणकान्तिमुच्चैरुदेष्यतश्चण्डरुचः प्रभेव ॥ ११ ॥

तुरङ्गमातङ्गशताङ्ग्योधैराक्रान्तयाग्रे जनितं धरित्र्या ।
रजः समीरप्रकृतप्रसारं प्रावर्ततावृत्य ततः पतङ्गम् ॥ १२ ॥

अर्कांशुसम्पर्कसमिद्धरोचिर्जटालशस्त्रप्रकरप्रकीर्णम् ।
सविद्युतां नीलवलाहकानां श्रियं दधौ राक्षसचक्रवालम् ॥ १३ ॥

तं शारिकाः प्रस्थितमाजिहेतोर्निरोद्धुकामा इव सम्पतन्त्यः ।
विभाविताग[1]मितिवेगति वीचीकूचीतिशब्दानसृजन्नुगान्ते ॥ १४ ॥

सन्ध्याभ्ररक्ताम्बरसंवृतानां मलीमसत्वेन तिरस्कृतानाम् ।
रजस्वलानां हरिदङ्गनानां धूमोपरक्तानि मुखान्यभूवन् ॥ १५ ॥

असृग्वसाचर्चिततीक्ष्णचञ्चुर्निमन्त्रयिष्यन्निव मृत्युदूतम् ।
रक्षांसि नेतुं पतिसन्निकर्षं केतौ पदं तस्य चकार गृध्रः ॥ १६ ॥

व्यात्तैर्मुखैरग्निमिवोद्गिरन्त्यः शिवाः प्रदीप्तां दिशमेत्य नेदुः ।
रक्षःकुलघ्नं रघुवंशरत्नं भानोरिवावेदयितुं प्रवृत्ताः ॥ १७ ॥

युक्तस्तुरङ्गैः क्षरितप्रहर्षैरासूत्रयन् भाविनमन्तरायम् ।
रामं त्रिलोकप्रथितं जिगीषोरुदस्खलत् तस्य रथः समेऽपि ॥ १८ ॥

---

1. 'गौरिवि' क. पाठः.

उच्चैरवष्टभ्य ततः स्वसारं स्वंसारमग्रे स विधाय वीरः ।
नेत्रप्रभापिञ्जरितान्तरिक्षस्तत्राभवद् यत्र स रामभद्रः ॥ १९ ॥
अथोत्थितां धूलिमवेक्ष्य दूरात् तत्कोपवह्नेरिव धूमराजिम् ।
अलङ्घ्यधाम्ना रघुपुङ्गवेन कोदण्डदण्डे समधायि दृष्टिः ॥ २० ॥
रूपामृतं निर्विशतः प्रियाया रवानथाकर्णयतश्चमूनाम् ।
विभोरभिव्यञ्जितरागरोपा नेत्रद्वयी भिन्नदशा बभूव ॥ २१ ॥
सीतां निधायावरजेऽसहिष्णुः स्वान्ते स सन्धामिव सत्यसन्धः ।
नभश्चरानाननचन्द्रकान्त्या प्रत्यायय(त् ? न्) प्रत्युदियाय सैन्यम् ॥
तत्रोदिते तादृशि सम्प्रहारे रक्षोभिरिक्ष्वाकुवरस्य तस्य ।
दिदृक्षयाविष्कृतहर्षनेत्रैर्वैमानिकैः कञ्चुकितं नभोऽभूत् ॥ २३ ॥
रक्षांस्यनेकानि तमेकमाजौ धृतप्रयत्नानि तपस्विवेषम् ।
दृढानुभावस्खलिताशयानि वीरं प्रहर्तुं सहसा न शेकुः ॥ २४ ॥
ततः प्रपद्य प्रकृतिं प्रचण्डां रक्षांसि रामं विशिखैररुन्धन् ।
पयोदवृन्दानि सगर्जितानि धाराभिपातैरिव शैलराजम् ॥ २५ ॥
न चाददानं न च सन्दधानं न च प्रमुञ्चन्तमिषूनमंस्त ।
रामं तु रक्षःपृतना तदीयं धनुः सदा मण्डलितं ददर्श ॥ २६ ॥
काकुत्स्थमव्याहतविक्रमं तं विद्वानपि ज्ञातखरानुभावः ।
आलोकयिष्यन् समितिं कथञ्चिद् भयादयात् स्वर्गसदां समाजः ॥
महानयं रामखराभियोगः स्थातानयोः कस्य मते जयश्रीः ।
विजेष्यते राम इति प्रभिन्ना नभश्चराणामुदपादि वाणी ॥ २८ ॥
निरीक्ष्यमाणः कृतमूर्धकम्पं स्वरेण गम्भीरतरस्मितेन ।
प्राग्वासनासंस्तुतभीतिवश्यः क्षणादपाक्रामदमर्त्यलोकः ॥ २९ ॥
धनुर्गलद्रामशरप्रवाहे निमज्ज्य निर्धावितविग्रहेभ्यः ।
निशाचरेभ्यः स्पृहयागताभिरलङ्कृतं व्योम सुराङ्गनाभिः ॥ ३० ॥
सा वाहिनी शूर्पणखाभिमर्शात् संरम्भसन्धुक्षितवीर्यसारा ।
तस्मिन् जगद्रक्षणलब्धवर्णे शस्त्राणि चास्त्राणि च पर्यमुञ्चत् ॥ ३१ ॥

१ 'सा' ख. पाठः.

ग्रस्तासवः शोणितरागशून्याः प्रवेशनिर्याणसमानकालाः ।
बाणा निशाता रघुपुङ्गवस्य नैवालगन् क्रव्यभुजां तनूषु ॥ ३२ ॥

स कन्दुकक्रीडनकं शिरोभिर्लीलाम्बुजानि त्रुटितैर्भुजाग्रैः ।
वापीरसृक्कर्दमवाहिनीभिर्वीरश्रियः कल्पयति स्म वीरः ॥ ३३ ॥

आकर्णमाकृष्टधनुर्विमुक्ताः क्रव्याशया युद्धभुवं गतासु ।
श्वगृध्रगोमायुपिशाचजातिष्वपि प्रमादान्न शरा निपेतुः ॥ ३४ ॥

अलं मथित्वा भुवनानि गर्वादतःपरं वः स्थितिरत्र मा भूत् ।
निशाचरानित्थमुदीरयन्तः कृतान्तदूता इव तस्य बाणाः ॥ ३५ ॥

शब्दायमाना कलितार्तिरुच्चै रामाङ्गुलीभिश्चतुरं गृहीता ।
वरूथिनीमाकुलतां नयन्ती शरप्रपञ्चं सुषुवे धनुर्ज्या ॥ ३६ ॥

विशुद्धिमन्तःकरणस्य गुर्वीमभिक्रमेण प्रतिदर्शयन्ति ।
रक्षांसि रामप्रहितान् पृषत्कान् न प्रत्यगृह्णन्नपरान्तभागैः ॥ ३७ ॥

शिलीमुखैर्दाशरथिप्रमुक्तैर्निकृत्तजङ्घाग्रकरोत्तमाङ्गैः ।
रक्षोभटैः कैश्चन साम्पराये कूर्मासकस्याकृतिरन्वकारि ॥ ३८ ॥

शस्त्रेषु हस्ता स्थिरमुष्टिबन्धं पादा दृढाङ्गुष्ठनिवेशमुद्राम् ।
न मन्युमानग्रहणं च वक्त्राण्यपि प्रहृक्णानि जहुर्भटानाम् ॥ ३९ ॥

व्यात्ताननश्रोत्रगुहा गजेन्द्राः कुथेन धातुश्रियमावहन्तः ।
विकीर्णपादाः क्षतजं क्षरन्तः पेतुर्महीध्रा इव लूनपक्षाः ॥ ४० ॥

छिन्नेऽपि तस्येषुभिरुत्तमाङ्गे ससादिनः स्वस्य निरस्तहेषम् ।
अश्वीयमभ्यासवशान्मुहूर्तं पदानि चक्रे युधि धौरितेन ॥ ४१ ॥

भग्नध्वजापस्करकूबराक्षास्तत्सायकैरस्तमिताधिनाथाः ।
रथाः समुद्रानिलवेगरुग्णैः पोतैस्तुलामारुरुहुस्तदानीम् ॥ ४२ ॥

रक्षांस्यनेकानि जगत्प्रमाथीन्येकः पदातिः क्षितिपालसूनुः ।
अस्त्वेतदेवं स तथापि वीरः कृतान्तवश्यानि चकार तानि ॥ ४३ ॥

रामेषुतीर्थेषु तथाप्लुतानां त्रिविष्टपं प्राप्नुवतां भटानाम् ।
आसीदहंपूर्विकया विमर्दः सुराङ्गनानामुपसङ्ग्रहाय ॥ ४४ ॥

---

१. 'यु', २. 'प्रवेशः स्वयंवरश्चापि सुराङ्गनानाम्' ॥ क. पाठः.

खमुत्पतिष्णून् रभसा(न?त)कबन्धान् निरोद्धुकामा जगृहुः पिशाचाः।
निरस्य ते तान् ननृतुर्नभःस्थाः भ्रूनेत्रलीलाविकलैः प्रयोगैः ॥ ४५ ॥
उत्तारमुत्तानितलोचनानि हुङ्कारगर्भाणि मुखानि वीक्ष्य ।
परेयुषां संयति नैर्ऋतानां साशङ्कमेवापसृतं पिशाचैः ॥ ४६ ॥
क्रव्याशिनां वीरगतिं गतानामुद्धृत्य जिह्वानयनानि पूर्वम् ।
स्वशावक्त्रेषु समर्प्य पश्चाज्जघास मांसं कठिनं पिशाची ॥ ४७ ॥
आपूर्यमाणं पिशितोपदंशैरतुच्छरक्तासववत्राहि भीमम् ।
स्थानं तदाविष्कृतफेरुगीतं व्यराजतोद्यानमिवान्तकस्य ॥ ४८ ॥
अनीकिनीं द्रागवमृद्यमानां स्वां दूषणः प्रेक्ष्य रघूद्वहेन ।
रुषोपरक्ताकृतिरत्यमर्त्यं स्वपौरुषं दर्शयति स्म तस्मै ॥ ४९ ॥
विसर्गनिर्यद्ध्वनिना सरोषं हुङ्कारमभ्युद्गिरतेव भीमम् ।
विदारिणा राघवसायकेन न चक्षमे तस्य बलावलेपः ॥ ५० ॥
कालेन तस्मिन् बलिना निगीर्णे विव्याध रामं त्रिशिराः शरौघैः ।
यशःशरीरेण विराजमानः स च द्रुतं दूषणमन्वगच्छत् ॥ ५१ ॥
अतृप्तमाजा[1]विव तस्थिवांसं शरासनज्यां ध्वनयन्तमुच्चैः ।
अपश्यदैक्ष्वाकमनल्पवीर्यः खरः कृतान्तद्युतिमेकमेकः ॥ ५२ ॥
विष्फारयन्तौ धनुरुग्रघोषं परस्पराशंसितकर्मसिद्धी ।
उभौ मिथस्तावपरोक्षवीर्यौ गभीरसंरम्भमवैक्षिषाताम् ॥ ५३ ॥
चापौ तयोर्मुष्टिनिपीड्यमानौ मौर्वीरवैः क्रन्दितमाचरन्तौ ।
व्यमुञ्चतां रुद्धनभोनि[2]वेशां परस्परस्योपरि बाणवृष्टिम् ॥ ५४ ॥
कृतप्रतीकारकृतोर्यथावत् समानयोस्तादृशि सम्प्रहारे ।
मिथस्तयोस्तत्र जयानुरोधः प्रसह्य गन्धद्विपयोरिवासीत् ॥ ५५ ॥
अहीयताहीनबलस्य सं(खे? ख्ये) खरः पुरस्ताद् रघुराजसूनोः ।
तेजोविशेषेण विशीर्णकान्तिः सहस्रभानोरिव शीतरश्मिः ॥ ५६ ॥
रामानुभावेन निजे निगीर्णे सुरासुरध्वंसकृति प्रतापे ।
औवाग्निनिष्पीतजलस्य सिन्धोः कष्टां दशां निर्विविशे खरेण ॥ ५७ ॥

---

१. 'ववत', २. 'वि' क. पाठः.

मतिभ्रमोऽयं किमु किन्तु माया स्वप्नागमो वा निहता नु शक्तिः ।
स्वस्मिन् महिम्न्यस्तमिते दुरन्तां चिन्तामिति ग्रस्तधृतिः प्रपेदे ॥

अमानुषं वीक्ष्य स तस्य वीर्यं विशुद्धधीर्वीरगतिं गमिष्यन् ।
निजैरशेषैरिषुभिः समन्तात् समर्चयामास तमात्तधैर्यः ॥ ५९ ॥

निर्वाणमाशु प्रतिपत्स्यमानश्छायाविशेषं प्रतिपद्य सद्यः ।
स्नेहात्ययाद् रिक्त इव प्रदीपो भूयोऽप्यतिप्रज्वलति स्म वीरः ॥ ६० ॥

अथापदानेन सुरासुराणां निरत्ययं विस्मयमादधानः ।
रामाज्ञया पञ्चसु बाणमय्या महत्सु भूतेषु समं निलिल्ये ॥ ६१ ॥

व्याप्ते तथा रक्षसि कुम्भयोनिं प्रीतः पुरोधाय तपस्विवर्गः ।
प्राध्वंप्रयुक्ताग्रकरोपचारः काकुत्स्थमाशीर्भिरथाभ्यनन्दत् ॥ ६२ ॥

दिष्ट्या वनेऽस्मिन् वसतिस्तवासीद् दिष्ट्या युवां शूर्पणखाभिपेदे ।
दिष्ट्या खरोऽयं विफलीकृतस्तन्मन्यामहे साधु कृतं तपो नः ॥ ६३ ॥

इतः परस्तादपनीतमेव स्फीतं भयं नः क्षणदाचरेभ्यः ।
यशश्च ते शाश्वतमेतदासीदित्येकवाक्यं च पुनर्वितेने ॥ ६४ ॥

सङ्ग्रामसंरम्भवशा(मु?दु)दीतैः स्वेदाम्बुलेशैः कृतफालभूषम् ।
परिभ्रमस्रस्तजटानिबन्धं खरप्रयुक्तेषुविभिन्नगात्रम् ॥ ६५ ॥

स्तोकालसाक्षं धनुरूर्ध्वकोटीधृतैकहस्ताग्रकृतावलम्बम् ।
सीतानुकम्पाप्रणयानुविद्धैरपाङ्गपातैर्निरराजयत् तम् ॥ ६६ ॥

(युग्मकम्)

इति निशाचरकुलप्रमथनेन मुदितै-
र्मुनिगणैरुपहृतार्हणविशेषसुहिते ।
दिविषदां परिषदोऽथ रघुवंशतिलके
जय जयेति वचनानि पदवीं विदधिरे ॥ ६७ ॥

इति रघुवीरचरिते पञ्चमः सर्गः ।

---

१. 'तोऽयं मन्या' ग. पाठः. २. 'नस्तपसां स पाकः ॥' ख. पाठः.

# अथ षष्ठः सर्गः ।

रामाय विश्वोपकृतिक्षमाय स्वस्तीति वाचं मुनयो वदन्तः ।
निरन्तराये तपसि प्रवृत्ता यथागतं ते प्रतिजग्मिवांसः ॥ १ ॥

दिष्ट्योपसृष्टेषु निशाचरेषु प्रीतेषु यातेषु च तापसेषु ।
चापाटनेज्यामवरोप्य वीरे स्वमाश्रमं जग्मुषि रामभद्रे ॥ २ ॥

लङ्केश्वराय प्रथमं मुखेन सौमित्रिलूनावयवोत्कटेन ।
न्यवेदयच्छूर्पणखा समस्तां दशां वचोऽस्याः पुनरुक्तमासीत् ॥ ३ ॥
(युग्मकम्)

रामोपसृष्टान् खरदूषणादीन् मुहूर्तमात्रेण रणेऽभियुक्तान् ।
सीतां च रामस्य वधूं मनोज्ञां तस्मै पुनः सा कथयाञ्चकार ॥ ४ ॥

आलोक्य चाकर्ण्य च तां तदुक्तं रामं च मत्वा महितप्रभावम् ।
स मैथिलीं प्रत्युदिताभिषङ्गो बभूव चिन्तास्तिमितो मुहूर्तम् ॥ ५ ॥

उपस्थिते तादृशि दुर्निवारे विनाशकाले विपरीतबुद्धिः ।
प्रतारणेन प्रततैरुपायैरमंस्त सीताहरणं हितं सः ॥ ६ ॥

निर्धार्य कृत्यं बलवद् बलीयान् संरम्भरागोद्धुतचित्तवृत्तिः ।
क्षमामिवोल्लङ्घ्य समुद्रवेलां स ताटकेयाश्रममाससाद ॥ ७ ॥

तं रामनामावि(रु?र)तं गृणन्तं कण्ठस्फुरत्तापसमुण्डमालम् ।
भयेन तिर्यग्वलिताक्षिपातं मारीचमाह प्रहितोपचारः ॥ ८ ॥

अस्मास्वकाण्डे कृतवैरबन्धं जानासि किं जानकिजानिमेतम् ।
बालेन येन प्रसभं व्यधायि भवज्जनन्यां प्रथमेषुपातः ॥ ९ ॥

वितन्वतः कौशिकयज्ञरक्षां तस्यापदानं फलितं सुबाहौ ।
निमज्जता सागरवारिचक्रे त्वया च सख्यं जलमानुषेषु ॥ १० ॥

मृषा विरिञ्चस्य वरप्रदानं मन्ये विराधे गमिते विरोधम् ।
तत् सर्वमास्तां खरघातिनं तं विचिन्त्य शान्तिं लभते न चेतः ॥

किंचान्यदाकर्णय च प्रवृत्ते रणे खरेण क्षितिपालसूनोः ।
हर्षोदयस्मेरमुखैरमर्त्यैर्नभःस्थलं कञ्चुकितं किलाभूत् ॥ १२ ॥

स्वस्त्यस्तु रामाय सलक्ष्मणायेत्युक्तं प्रमोदादृषिभिः समेतैः ।
प्रतिश्रुता तेन च तेषु रक्षा तृणाय मत्वा रभसोद्धुरान् नः ॥ १६ ॥

रिपोरभिव्यञ्जितभाविवृद्धेरुत्थानमेव प्रथमं निरोध्यम् ।
नखप्रभेद्ये तु तरुप्ररोहे कालेन कुण्ठा हि कुठारधारा ॥ १४ ॥
मित्रेऽपि वर्द्धिष्णुतया प्रवृत्ते हीयेत राजा दृढमण्डलोऽपि ।
द्विषत्यहीने तु विजृम्भमाणे पूर्वोचिता तस्य गतिः कथं स्यात् ॥
मनःप्रवृत्तिं प्रसभं निरुन्धन् जलस्रुतिं सेतुरिव प्रवद्धः ।
परैरपर्यस्तगतैर्विवेकः शौर्यद्विपस्यार्गलतां प्रयाति ॥ १६ ॥
विविच्य कालानुगुणैरुपायैर्[1]यतेत सन्ध्यादिपु युक्तचेताः ।
यत्किञ्चिदित्यादि विचिन्त्य[2] राजा करोति यत् तज्जडतैकलिङ्गम् ॥
तेजोविशेषोपचितः परस्थं तेजः क्षिपत्यप्यपदे जघन्यम् ।
कमर्थमुद्दिश्य न चेदितीदं हिनस्ति खद्योतगतं विवस्वान् ॥ १८ ॥
उपेक्षमाणो विकृतिं परेषां[3] प्रवर्तते यः स्वसमृद्धिहेतोः ।
स दावकीलैर्विपिने परीतं पटेन तूर्णं वपुरावृणोति ॥ १९ ॥
सतेजसा धाम्नि हृते सधाम्नः कथं सपक्षः क्षमतां सगोत्रः ।
पश्यानलग्रस्तरुचौ पतङ्गे सद्यस्तमेवाविशतः पतङ्गान् ॥ २० ॥
इति स्थिते वर्त्मनि वीरयोग्ये सचेतनः कापथमाश्रयेत् कः ।
शिवोदकायां सरिति स्रवन्त्यां किमर्थनीयं मृगतृष्णिकाम्भः ॥ २१ ॥
तदत्र नः सन्निहिते विधेये विधत्स्व चेतः सहकारितायाम् ।
सहायवन्तं पुरुषं प्रकृत्या चलाप्युपास्ते नियमेन लक्ष्मीः ॥ २२ ॥
मृगाकृतिस्त्वं मृगलोचनाया गृहाण चित्तं जनकात्मजायाः ।
एवंविधेषु व्यसनागमेषु माया त्वदीया खलु शेवधिनः ॥ २३ ॥
यथाकथञ्चिद् भवता विदूरं प्रतार्य नेयौ रघुनन्दनौ तौ ।
तयोर्व्यपाये तरलेक्षणां तां सीतां ग्रहीष्ये धृतभिक्षुवेषः ॥ २४ ॥
इति स्थिरस्वाशयवृत्ति धीमान् निशम्य सम्यग् वचनं तदीयम् ।
विचिन्त्य युक्तक्षमकर्मशौण्डः प्रचक्रमे प्रत्याभिधातुमेनम् ॥ २५ ॥
निरस्तनिश्शेषविपक्षभावा मनस्विनां वर्त्म निदर्शयन्ती ।
स्वविक्रमाक्रान्तजगत्त्रयाणां भवादृशामित्युचितैव वाणी ॥ २६ ॥

---

१. 'चारः', २. 'धाय रा', ३. 'तः' ख. पाठः. ४. 'भो', ५. 'त्याख्य ने' क. पाठः.

तथाप्यपर्याप्ततया न धत्ते स्थितिं विधेयेऽत्र मतिर्मदीया ।
यत् कर्म कालत्रितयाविरोधि स्तुवन्ति हि प्राज्यधियस्तदेव ॥ २७ ॥
अपि प्रभो! दुश्चरितैस्तवैभिः स्यात् स्वस्ति किं सर्वनिशाचरेभ्यः ।
अपि त्वदन्ताय जगत्प्रमाथिन्! सीता न किं यज्ञभुवः प्ररूढा ॥ २८ ॥
श्रुत्वा वचो वक्ति विविच्य पश्चात् करोति कर्माणि गुणान् वृणीते ।
यः सर्वतः साधुषु निर्व्यलीकस्तस्मिन् प्रतिष्ठां प्रतिपद्यते श्रीः ॥ २९ ॥
अस्त्येव जन्तुष्वखिलेषु कामः क्रोधश्च तौ वह्निवदाश्रयाशौ ।
कालानुरोधेन निषेवमाणस्तौ नैति सादं पुरुषः कदापि ॥ ३० ॥
लज्जाविवेकौ वशिताप्रबोधौ[1] विविक्तविद्याविनयानुबन्धौ ।
प्रगल्भताशुद्धपराक्रमौ च रक्षन्ति नित्यं पुरुषस्य लक्ष्मीम् ॥ ३१ ॥
सुरासुराचार्यकृतौ नयस्य द्वौ नाम मार्गौ बहुधा प्रणाता ।
शिष्यैः पुनस्तेषु कृतावगाहा न जातु सीदन्त्यपि सङ्कटेषु ॥ ३२ ॥
आत्मोदयेन द्विषतां व्यपायं केचित् परे तद्विपरीतमाहुः ।
इत्यस्ति पक्षद्वितयी तयोर्मां निरापदाद्यः प्रसभं धिनोति ॥ ३३ ॥
ये तादृशाः कौशलमाचरन्तः परैरपर्यस्तभुजावलेपैः ।
निर्धूयमाना बहुशः प्रतिष्ठामारोहपादा इव ते लभन्ते ॥ ३४ ॥
आपादनीया मनसो विशुद्धिर्बुभूषुणा[2] पूर्वमतन्द्रितेन ।
संस्कारहीनात् पुरुषाद् विलोलाः श्रियः स्रवन्त्याममघटादिवापः ॥३५॥
प्रसीद राजन्! परदारतृष्णामपाकुरुष्वाशयतः प्ररूढाम् ।
भवादृशामुत्पथगा मतिश्चेत् कथं नु वर्तेत जनो नियम्यः ॥ ३६ ॥
इत्युक्तवन्तं पुरुषादमुच्चैर्भूयोऽपि रक्षोधिपतिर्बभाषे ।
जिजीविषा चेतसि ते यदि स्यात् प्रियं ममाधातुमिहार्हसीति ॥ ३७ ॥
तथेति वाचं विमना विसृज्य प्रपद्य रामाश्रमसन्निकर्षम् ।
विलोभयिष्यन् मिथिलेन्द्रपुत्रीं मृगस्य रूपं परमं स भेजे ॥ ३८ ॥
तुण्डाग्रतस्तस्य कलायनीलाद् विनिष्पतन्ती रसना बभासे ।
अनुक्षणं मेदुरनादगर्भाद् घनाभ्रखण्डादचिरप्रभेव ॥ ३९ ॥

---

१ 'बोधौ', २. 'थे' ग. पाठः.

विशुद्धचन्द्रातपपेशलार्धे नीलोपलाङ्गिग्धतमःस्वरूपा ।
परत्र च व्यञ्जयति स्म भूम्ना तस्याष्टमीरात्रिरुचिं मुखश्रीः ॥ ४० ॥
चतुर्भिरग्रैर्ज्वलिते तदीये शृङ्गे चतुर्वर्गमिव प्रभेदुम् ।
लोकस्य यत्ते मणिरश्मिराजीनीराजिताशावलये व्यभाताम् ॥ ४१ ॥
तस्योल्लसत्स्निग्धविदग्धमुग्धस्मेरालसाकेकरकूणिताभ्याम् ।
अनुक्रियन्ते स्म विलोचनाभ्यां विदग्धनारीनयनेहितानि ॥ ४२ ॥
तस्योन्मिषद्राजतबिन्दुचित्रा[२] शरीररीतिः कनकावदाता ।
सन्ध्यामहोभिश्छुरितान्तराला नभस्थली तारकितेव रेजे ॥ ४३ ॥
उरस्तदीयं शरदिन्दुपाण्डु व्यराजतोच्चावचरोमराजि ।
परिस्फुटावर्तनिवेशमन्ते धृतप्रतिस्रोत इवाम्बु गाङ्गम् ॥ ४४ ॥
अत्रस्नुवैडूर्यखुरोज्ज्वलेन सुपर्वणा पादचतुष्टयेन ।
तस्यर्षिचित्तभ्रमणैकहेतोः सन्दंशिकायन्त्रधुरा ललम्बे ॥ ४५ ॥
विचित्रनानामणिरश्मिजालैः किर्मीरितेनोर्ध्वमुखेन तस्य ।
पुच्छेन विच्छर्दितशारधाम्ना महेन्द्रचापच्छविरन्वकारि ॥ ४६ ॥
स्थितश्चलश्चास्तमितः प्रपन्नः प्रकाशतां दूरचरोऽन्तिकस्थः ।
अथ प्रविष्टः क्षितिमुत्प्लुतः खं विलोभयिष्यन् व्यतनोत् स मायाम्॥४७॥
तं पर्णशालासविधे चरन्तं चरन्तमव्यग्रतया तृणाग्रम् ।
कुतूहलावेगतरङ्गिताक्षी लीलार्थमादातुमियेष सीता ॥ ४८ ॥
इत्याह चेक्ष्वाकुकुलावतंसं रामं प्रभो! पश्य मृगं विचित्रम्।
क्रीडार्थमस्मै स्पृहयालुरस्मि समानयैनं सपदि त्वचं वा ॥ ४९ ॥
निषिध्यमानोऽपि स लक्ष्मणेन मायेयमित्यव्यथितेन्द्रियेण ।
विश्वस्य योषिद्वचनं मनस्वी तमन्वगात् प्रेरितधीर्नियत्या ॥ ५० ॥
आसन्नमासन्नमिवैणमेनं संलक्ष्य संलक्ष्य गतो विदूरम् ।
उपायतस्तद्ग्रहणे निराशस्त्वचं समाधातुमियेष भूयः ॥ ५१ ॥
सन्धाय बाणं धनुषि स्थिरज्ये यावत् प्रहर्तुं व्यतनोत् स चेतः ।
तावत् स मायामवलम्ब्य रक्षस्तल्लक्षतां नाभ्यगमन्मुहूर्तम् ॥ ५२ ॥
अथाविरासीत् सहसा पुरस्तात् प्रकाशयन्नम्बरमात्मभासा ।
रामेण बाणः प्रहितस्तदानीमसूंस्तदीयान् द्रुतमाचचाम[३] ॥ ५३ ॥

१. 'त्व' क. पाठः. २. 'मिच्छुरि' ख. पाठः. ३. 'र' क. पाठः.

पतन्नथ स्वां प्रकृतिं प्रपन्नस्त्रायस्व हा लक्ष्मण! मामिहेति ।
उच्चैरुपाक्रोशदवेत्य सीता तद्[1] देवरं देवसमं जगाद ॥ ५४ ॥

छलेन रक्षोभिरुपद्रुतस्य भ्रातुस्तव श्रूयत एष शब्दः ।
धनुष्मता तत्र समेत्य तूर्णं रक्षा तदीया भवता विधेया ॥ ५५ ॥

निशम्य तद्वाक्यमथ ब्रुवाणं मायेति सौमित्रिमुवाच सीता ।
नाहं वयस्या मिहिरव्यपाये दिनश्रियः पावकमाविशन्त्याः ॥ ५६ ॥

इति स्थिरप्रेमबलात्कृतायास्तस्यास्तदाकर्ण्य वचः सशोकः[2] ।
मायेति जानन्नपि दिष्टयोगात् स यत्र शब्दस्तमभि प्रतस्थे ॥ ५७॥

निष्क्रान्तमात्रे रभसेन तस्मिन् निधाय सीतां वनदेवतासु ।
तां पर्णशालां प्रविवेश मायी दशाननो मूर्त इवान्तरायः ॥ ५८ ॥

तं तस्करं मस्करिवेषभाजं दृष्ट्वा[3] तृणैश्छन्नमिवान्धकूपम् ।
सम्पाद्य पाद्यार्घ्यमुखोपचारान् समर्हयामास समर्हणज्ञा ॥ ५९ ॥

निर्वर्ण्य तां स्वर्णमनोहराङ्गीं स्वं[4] रूपमास्थाय पुनर्दशास्यः ।
क्षणेन रामागमनाभिशङ्की रथं समारोप्य खमुत्पपात ॥ ६० ॥

हा राम! हा लक्ष्मण! पाहि मामित्यार्तस्वरं हृत्परुषं निशम्य ।
रुरोध मार्गं बलवज्जटायुर्लङ्कापतेर्विन्ध्य इवोष्णरश्मेः ॥ ६१ ॥

विधूतपक्षेण वयोधिकेन निराश्रये वर्त्मनि तेन रुद्धः ।
लीलोद्धृतेशानमहीधरोऽपि क्षणं हृदि व्याकुलतामवाप ॥ ६२ ॥

तौ पक्षिरक्षःप्रवरौ पतत्रैर्भुजैरपि व्याप्य नभोन्तरालम् ।
परस्परोत्सारणबद्धयत्नावातस्थतुः शैलवराविवोभौ ॥ ६३ ॥

ततः समानेऽपि रणापदाने दैव्या महिम्ना भवितव्यतायाः ।
तस्यारुणेः पक्षतिमुग्रचञ्चोः पुलस्त्यसूनोरसिरालिलेह ॥ ६४ ॥

हा मैथिलि! प्राप्स्यसि कामवस्थां हा राम! सौमित्रिसखेदृशोऽस्मि[5] ।
प्राणैर्गलस्थैर्गलता स्वरेण ब्रुवन्निति क्ष्मातलमाससाद ॥ ६५ ॥

---

१. 'तं दे' ख. पाठः. २. 'सुदुःखी ।', ३. 'मत्वा तृ', ४. 'स्व', ५. 'स्ति' क. पाठः.

परिक्षताङ्गो विरथो विधन्वा तुण्डेन विध्वस्तकिरीटकोटिः।
तामुद्वहन् योगबलेन सीतां लङ्कां प्रति प्राप्तजवः प्रतस्थे ॥ ६६॥

सा नीयमाना गिरिशृङ्गभाजः समीक्ष्य पञ्च प्लवगाननाथा।
मध्ये सुमध्या परिवेष्ट्य तेषां सभूषणं प्राक्षिपदुत्तरीयम् ॥ ६७॥

तदा तदालोक्य वलीमुखास्ते स्त्रियं च काञ्चित् कनकावदाताम्।
दशाननेनोपरि नीयमानां तदीयतां तस्य हृदा व्यजानन् ॥ ६८॥

अस्पन्दमानाशयवृत्तिमेनामन्यत्र रामात् प्रसभं प्रगृह्य।
उल्लङ्घ्य दुर्लङ्घमपां निधानं विवेश लङ्कां क्षणलब्धमोदः ॥ ६९॥

तथा हृतायां रघुराजपत्न्यामन्तर्गलस्तम्भितदीनशब्दम्।
भिया शुचा म्लानमुखाम्बुजाभिर्व्यरोदि विष्वग् वनदेवताभिः ॥

क्षितिः सकम्पा कलुषाणि वारीण्यवाप न स्वं महिमानमर्कः।
स्तब्धोऽनिलस्तत्सरणिश्च धूम्रा विश्वं तदेवं विषमस्थमासीत् ॥ ७१॥

विधाय परिरक्षणं परिचितैः स्वकीयैर्जनै-
र्धियं मदनमन्थरां दधदपास्तकृत्यान्तराम्।
सशोककलुषाशयामनुचितामवस्थामिता-
मशोकवनिकां गतां व्यधित तां निधिं स्वापदाम् ॥ ७२॥

इति रघुवीरचरिते षष्ठः सर्गः।

---

## अथ सप्तमः सर्गः।

अथ दाशरथिस्तथाविधे पतिते रक्षसि रक्षतां वरः।
विमृशन् किमपि प्रियां प्रति प्रचुरश्रान्तिं ततो न्यवर्तत ॥ १॥

नयनोरुभुजैरदक्षिणैः प्रतिपन्नस्फुरितैरलक्षणम्।
उपसूचितमापदागमं स मनस्वी मनसा व्यशङ्कत ॥ २॥

किमु मातृषु कापि दुर्दशा भरतः किं न सुखेन वर्तते।
विपदुत्तरकोसलेषु नः प्रबलाभिर्नु किमीतिभिः कृता ॥ ३॥

---

१. 'स्फटिका', २. 'का', ३. 'स्तदीये', ४. 'काग' क. पाठः. ५. 'किं नु सु' ख. पाठः.

बलवन्मयि लक्ष्मणानुगे पितुराज्ञामवलम्ब्य दूरगे ।
अथवा खरदूषणानुगैः किमु साकेतपुरं कथीकृतम् ॥ ४ ॥

सकलेषु दशान्तरेष्वपि प्रतिरूढप्रणयार्द्रचेतसौ ।
अपि नाम भवेव दुर्जयः स च सौमित्रिरहं च सङ्गतौ ॥५॥

अवधूय सुखानि दुस्त्यजान्यनुरक्तं स्वजनं च तादृशम् ।
वनवासपरायणस्य मे सहधर्मैकरता बभूव या ॥ ६ ॥

जनकस्य सुता सुखैधिता सुकुमारी महनीयसम्भवा ।
हृदयङ्गमशीलशालिनी भवतु स्वस्तिमती चिराय सा ॥७॥

इति चिन्तयता बहूत्तरं परितापस्तिमितेन चेतसा ।
परिभूत इव च्युतद्युतिः पथि सौमित्रिरदृश्यताग्रतः ॥ ८ ॥

किमिवाचरितं[2] त्वयानघ! क्व नु सीतेति च तेन पृच्छता ।
अपवारितसत्त्वसङ्ग्रहा[3] करुणा कापि दशान्वभूयत ॥ ९ ॥

जनकेन्द्रसुताभिरक्षणे कृतमार्येण ममानुशासनम् ।
परवानहम(न्यत्र) कर्मणीत्यहमेकाग्रतया व्यवस्थितः ॥ १० ॥

भवता हरिणे निपीडिते मुहुरश्रूयत दुर्वचं वचः ।
अवधार्य तदार्यया शुचा परुषं वाक्यमहं च लम्भितः ॥

उभयत्र विचिन्त्य योग्यतां परुषोक्त्यास्मि तया बलात्कृतः ।
इह सन्निहितश्च मा स्म भूद् विषमा ते मतिमन्! मतिर्मयि ॥

इति रूक्षमहृद्यमार्तिकृत् कटुदुर्भेषजधर्मि तद्वचः ।
उपयुज्य स सत्त्ववानपि प्रतिपेदे विकृतिं दुरुद्वहाम् ॥ १३ ॥

अवलुप्तधृतिर्धृतव्यथः सह दीनेन सहोदरेण सः ।
अवशः प्रविवेश वेगवानयथापूर्वदशं स्वमाश्रमम् ॥ १४ ॥

अपविद्धवृसीघटाजिनं कबरोद्भ्रान्तमणीचकासितम् ।
उटजं गतसीतमैक्षत क्षरितज्योत्स्नमिवेन्दुमण्डलम् ॥ १५ ॥

लुठदुत्पतदुद्भ्रमत् स्वपत् स्मृतिसंस्कारसमुत्सुकं जडम् ।
अपकल्पमपश्यतः प्रियामभवच्चित्तमनन्वितक्रियम् ॥ १६ ॥

---

१. 'संहितौ', २. 'पतितं', ३. 'विग्र' ख. पाठः. ४. 'व्ये' क. पाठः.

कुसुमान्यवचेतुमुद्यता विपिने किन्तु चकार संस्तवम् ।
नियमाय समाहिता भवेदवतीर्णा किमु गौतमीं नदीम् ॥ १७॥

यदिवा मयि विप्रलम्भिते मनसः कश्चन भावसङ्करम् ।
अवलोकयितुं तिरोहिता किमु सा पुष्पलतास्ववस्थिता ॥

बहुधेति विमृश्य तेन सा विचिता तेषु पदेषु तत्पदम् ।
अनवाप्य सलक्ष्मणः क्षणादुटजं स्वं पुनरप्यवाप्य सः ॥

व्यथितः प्रिययानुरूपया रहितश्चन्द्रिकयेव चन्द्रमाः ।
अपवार्य गभीरतामिति व्यसृजत् कानिचिदक्षराणि सः ॥ २० ॥

अयि मैथिलि! जीवितेश्वरि! क्व नु यातासि विहाय मामितः ।
न वनाय परं मया धृतस्तव भामिन्यवनाय चोद्यमः ॥ २१ ॥

यदि मन्युरपाकुरुष्व तं परिहासश्च चिरं न शोभते ।
क्वचिदप्यभिषङ्गविह्वलं जनमेनं न विहातुमर्हसि ॥ २२ ॥

अभिगम्य मया यदाहृता मिथिलायास्त्वमनुज्ञया गुरोः ।
गुणगौरि! तदाप्रभृत्यहं न पृथग्वृत्तिमुपाश्रितस्त्वया ॥ २३ ॥

परिपाल्य समेधिता त्वया फलिनीयं नवपल्लवोज्ज्वला ।
अभिवाञ्छति वाञ्छितप्रदे! समये त्वत्करकल्पितं पयः ॥

अभिनृत्यतु तावदुन्मदः स्वकलापानवकीर्य बर्हिणः ।
अवगम्य सुकेशि! मद्दशामिह यावन्न परापतिष्यसि ॥ २५ ॥

सजलाभ्ररुचः शिरोरुहाः कुरलैः शैवलकान्तिराहृता ।
निटिलं शशिखण्डबन्धुरं तनुकल्लोलरुचि भ्रुवोर्युगम् ॥ २६ ॥

मृदुमांसलपक्ष्ममालिके विकचेन्दीवरपेशले दृशौ ।
श्रवणे तरुणारुणद्युतिस्फुटरोचिर्मणिकुण्डलोज्ज्वले ॥ २७ ॥

तिलसूनपराभवप्रदा मधुराभाषिणि! नासिकासिका ।
कुमुदप्रतिमं मृदुस्मितं रुचिरः पल्लवकोमलोऽधरः ॥ २८ ॥

---

१. 'प' क. पाठः २. 'न कदाचिदपि त्वदाश्रये ज', ३. 'यदा मयाहृ, ४. 'शौ । तिल' ख. पाठः. ५. 'लाध' क. पाठः.

शिथिलीकृतमौक्तिकस्मया रुचिरा दन्तततिः शुचिस्मिते ! ।
कृतपत्रलता कपोलयोर्युगली दर्पणदर्पहारिणी[1] ॥ २९ ॥
जितहेमलता भुजद्वयी गलरीतिर्धृतकम्बुडम्बरा ।
समवृत्तसमुन्नतौ स्तनौ कृतमुक्तामणिहारभूषणौ ॥ ३० ॥
बलिभिस्तिसृभिः प्रसाधि[2]ता रुचिरश्रीरवलग्नवल्लरी।
समबाधि नितम्बशोभया पुलिनश्रीः कलहंसमालिनी ॥ ३१ ॥
अतुले करभोरु! जानुनी मदनादर्शसमुद्गतां गते ।
अचिरोद्गतकेतकोपमे तव जङ्घे कमलोपमे पदे ॥ ३२ ॥
इति भूषितमुत्तमैर्गुणैस्तव सर्वाकृतिसुन्दरं वपुः ।
हृदयं दहति प्रसह्य मे हृदयग्राहिणि! दूरवर्तिनः ॥ ३३ ॥
प्रभवस्तव गौतमान्मुनेस्त्वयि सर्वा निवसन्ति देवताः ।
यद[3]वेक्ष्य स पाथसां निधिर्व्रजति त्वां किमवैपि तत्सुखम् ॥
त्वयि विश्वसनीयतागुणं विगणय्याहमिह व्यवस्थितः ।
विषये कुरु मे दृशोः प्रियामयि गोदावरि! ते नमो नमः ॥
अनुगोदमिदं वपुर्भवेद् ध्रुवमाकण्ठनिमग्नमम्भसि ।
सुतनोरभिलक्ष्यते मुखं बत नैतत् तदिदं हि वारिजम् ॥ ३६ ॥
हिमवारि तवास्तु विप्लवे ग्लपयन्त्विन्दुकरास्तव श्रियम् ।
वनितामुखसन्निधौ त्वया खल! पङ्केरुह! रङ्क! हीयताम् ॥३७॥
हरमौलिविभूषणं भवान् वरयोषिन्मुखसाम्यमस्तु ते ।
मम मूर्ध्नि धृतोऽयमञ्जलिस्त्वयि सोम! ग्लपयाम्बुजाश्रियम् ॥
भगवन्! भुवनानि पर्यटन्न[4]हिमांशो! परिपासि यान्यसि ।
प्रणतोऽस्मि ममेप्सितं कुरु त्यज नीचं कमलेषु सौहृदम् ॥
अभिजन्म यशांसि जीवितं सुहृदर्थः स्वजनः पराक्रमः ।
सहधर्मचरीति यत् प्रिये! त्वदधीनं तदिदं ममाखिलम् ॥ ४० ॥

---

१. 'णी । श्रवणे तरुणारुणद्युतिस्फुटरोचिर्मणिकुण्डलोज्ज्वले । जि', २. 'रि, ख. पाठः. ३. 'पे' क. पाठः. ४. 'हि' क. पाठः.

अयमञ्जलिरञ्जसा धृतः शिरसा चण्डि! कृपैव तावकी ।
शरणं मम मान्यथा कृथा हृदि सत्यं पदयोः शपामि ते ॥

इति तं विलपन्तमान्तिके निवसन्त्यः समदुःखकर्शिताः ।
अरुदन्मुखरा मधुव्रतैर्धृतिमुत्सृज्य वनान्तदेवताः ॥ ४२ ॥

अथ तादृशि शोकसागरे विषमं प्राप्य निमग्नमग्रजम् ।
बुधमप्यभिषङ्गनिस्सहं भृशमाश्वास्य जगाद लक्ष्मणः ॥ ४३ ॥

हृदयक्लमकारिभिः कृतं कृतमेभिः परिदेवितैः प्रभो! ।
विषमव्यसनागमेऽपि यन्न विषीदन्ति भवादृशां धियः ॥ ४४ ॥

अनया कवलीकृते दृशौ दृढमुत्पाटय पर्णशालया ।
अविलम्बितमेव तां हृतां पुनरन्वेष्टुमुपक्रमावहे[2] ॥ ४५ ॥

उटजं तदपास्य निर्गतौ सरिदभ्याशवनान्तभूमिषु ।
गिरिसानुषु गह्वरेषु तौ कृतबाष्पस्रुति तां विचिक्यतुः ॥ ४६ ॥

महता श्वसितेन निस्सृतं मुखतः फेनिलमस्रमुद्वमन्[3] ।
विलुठन् भुवि लूनपक्षतिर्ददृशे तत्र जटायुरध्वनि ॥ ४७ ॥

कथमेतदवस्थता तवेत्यनुयुक्तः प्रभुणा जगाद सः ।
इह शाखिनि तस्थुषा मया करुणः कश्चन शुश्रुवे ध्वनिः ॥

रुदतीमधिरोप्य मैथिलीं हृदि पर्याप्तमनोरथं रथे ।
नभसोत्पतितं दशाननं द्रुतमुत्प्लुत्य निरुद्धवानहम् ॥ ४९ ॥

अपदानमनुष्ठितं मया महदल्पेन पतत्रिणा सता ।
रघुनाथ! तवानुभावतः परमेतद् विपिनेऽत्र दृश्यताम् ॥ ५० ॥

मरुदध्वनि मण्डलानि नौ चरतोश्चित्रतराणि तेन मे ।
उदलूयत खड्गपाणिना बत पक्षस्तव चोपकारकः ॥ ५१ ॥

पतिते मयि तां हरन् ययौ स्मरणीयोऽस्मि कुरुष्व यद्धितम् ।
शिथिलैस्स्वरमूर्छितैरमुं निजगाद स्म विनिस्सृतासुकम् ॥

इति गृध्रमवेक्ष्य संस्थितं निजहेतोर्मृधि लक्ष्मणाग्रजः ।
उपकारि दृढं विजज्ञिवानथ तिर्यञ्चगतमेव सौहृदम् ॥ ५३ ॥

---

१. 'गिरसा', २. 'हे' ख. पाठः. ३. 'नि ॥ स्व', ४. 'लः स्वयम्' क. पाठः.

स शुशोच भृशं रुरोद च क्षतजार्द्रं परिषस्वजे च तम् ।
पितृसख्यमनुस्मरन्मुहुः कृतमन्यैरपि कर्म दुष्करम् ॥ ५४ ॥

द्विगुणीकृतशोकगौरवः पितृभक्त्या पतगेश्वरं प्रति ।
विधिना कृतपश्चिमक्रतुः कृतवान् कृत्यपटुर्जलाञ्जलिम् ॥ ५५ ॥

अथ तस्य विभोर्हृदि स्थितां शुचमाक्रम्य रुषा पदं दधे ।
अपृथक्स्थितिमिच्छता तया रभसेनापि तथैव सङ्गतम् ॥ ५६ ॥

प्रलयं प्रतिपत्स्यते यथा जगदेतत् सकलं चराचरम् ।
अरुणिम्नि ममज्जतुस्तथा कमलान्तर्दलपेशले दृशौ ॥ ५७ ॥

कुपितस्य तथापि सुन्दरे वदने पञ्चषघर्मबिन्दवः ।
अभवन्नचिरोदिते विधौ नवपीयूषकणोद्गमा इव ॥ ५८ ॥

स्फुरति स्म विदेहनन्दनाहृदयानन्दविधानलम्पटः ।
अधरः श्वसितेन भूयसा परुषः पल्लवताम्रकोमलः ॥ ५९ ॥

प्रसभं मधुरिम्णि लङ्घिते सहजे दुर्विषहेण मन्युना ।
अधिदर्शमुदीयुषः श्रियं शशिगर्भस्य जहार भास्वतः ॥ ६० ॥

स दशान्तरमित्थमुत्थितं भजमानः प्रथमानविक्रमः ।
अभवाय समस्तरक्षसामिति वाचं निजगाद राघवः ॥ ६१ ॥

निजराज्यपरिच्युतस्य मे फलमूलैरुदरम्भरेरिह ।
जटिनस्तरुवल्कवाससः परिणामोऽ(भ्यु[1]ऽप्यु)चितोऽयमीदृशः ॥ ६२ ॥

दयितामपहृत्य मायया मम रामस्य तथाविधां तथा ।
यदि जीवति रावणः क्वचिद् धनुरेतत् त्रपयैव सन्नतम् ॥ ६३ ॥

यदि गच्छति धातुरन्तिकं यदिवा रुद्रसमीपमाश्रितः ।
जगदण्डबहिर्गतोऽपि सन् मम बाणैर्मृगयिष्यते सुखम् ॥ ६४ ॥

स्फुटितानिलनेमिसंसकं शरवहव्यस्तमितेन्दुतारकम् ।
शृणु मानद ! मैथिलीकृते गमयाम्यम्बरमम्बरीषताम् ॥ ६५ ॥

अमरासुरमर्त्यदुर्धरे विसृते व्योम्नि समाप्ततेजसि ।
इह तावदनूरुसारथेर्भविता फल्गुतमस्फुलिङ्गता ॥ ६६ ॥

---

१. 'ध' क. पाठः. २. 'सूचक' ख. पाठः.

मम चापविमुक्तसायकस्फुटितोर्ध्वाण्डकटाहनिस्सृतैः ।
प्रलयः खलु बाह्यवारिभिर्भुवनानामपदे विधास्यते ॥ ६७ ॥

दुरतिक्रमविक्रमस्य मे धनुरापृच्छ्य गतैर्दिशो दश ।
अपिशाचनिशाचरं जगद् ध्रुवमद्येषुगणैः करिष्यते ॥ ६८ ॥

अथवा विगणय्य मद्दशां नियतिस्तां यदि दर्शयिष्यते ।
प्रकृतिं प्रतिपत्स्यते तदा भुवनानां च शिवं भविष्यति ॥ ६९ ॥

इति रोषपराभवोद्धुते वदति ज्यायसि भूरितेजसि ।
वदति स्म मनः प्रसादयन्नथ सौमित्रिरमित्रशासनः ॥ ७० ॥

महता तपसा तपोभृतां विधिना चाधिगतोऽसि राघव! ।
अपि पङ्क्तिरथेन भूभृता स्वकुलच्छेदभयातुरात्मना ॥ ७१ ॥

स पिता सकलार्थतत्त्ववित् तव विक्रान्तिकृतेन्द्रसौहृदः ।
उपदेशकृतौ च तौ तपःपरिपक्वौ हि वसिष्ठकौशिकौ ॥ ७२ ॥

कुरुषे भरतप्रसूवचः किमु तद्धर्मभयेन केवलम् ।
परिपीड्य निरागसः प्रजाः क इवार्थः खलु साधयिष्यते ॥ ७३ ॥

सुखदुःखविवृद्धिविप्लवाः सह देहेन भवन्ति देहिनाम् ।
विमृशन्[2]निति तत्त्वमात्मना न बुधस्तत्र विपद्यते क्वचित् ॥ ७४ ॥

असुरौ मधुकैटभौ पुरा द्रुहिणं प्रत्युपरोद्धुमुद्यतौ ।
अपनीय तदुत्थितं भयं नियतिस्तं किल पर्यपालयत् ॥ ७५ ॥

चलति क्षितिरर्कसोमयोरुपरागोऽम्बुधिरौर्ववह्निना ।
ह्रियते प्रलयाय विश्वसृग् द्विपरार्धान्तमजः प्रतीक्षते ॥ ७६ ॥

सधनान् वितनोति संवृतानभिरूपान् जरसा हतौजसः ।
जयिनः सहसा पराजितान् किमिव प्राणिषु नेहतां विधिः ॥ ७७ ॥

न रुषा परिदेवितेन च क्रियते सिद्धिरमुष्य कर्मणः ।
[3]उभयं तदवेक्ष्य सूरिभिर्गुरुपारुष्यमृदुत्वदूषितम् ॥ ७८ ॥

त्यज तां कलुषां धियं त्वया दृढमुत्साहगुणः प्रपद्यताम् ।
विपदः किल तेरुरूर्जिता यमुपाश्रित्य भगीरथादयः ॥ ७९ ॥

---

१. 'यु', २. 'न्नपि त' क. पाठः. ३. 'प्रलयं' ख. पाठः.

इति मामनुशिष्टवान् प्रयान् पटुधीः स्मारयितुं ममोद्यमः ।
मतिमत्तम! सुप्रभाषिणा तदिदं त्वां प्रतिबोधयाम्यहम् ॥ ८० ॥

शिवमस्तु यतः स्वसिद्धये प्रजुषीत त्वयि सज्जतां गुणः ।
ऋजुताप्रदमाशुगं द्विषां प्रहिणु त्वं विजयाय मामपि ॥ ८१ ॥

सगुणामिति तद्गिरं विभुर्निदधे चेतसि सर्वसारवित् ।
विनिपातरुजैकभेषजं न हि सौभ्रात्रसमं धनं नृणाम् ॥ ८२ ॥

लुलितायुधवर्मवाहनत्रुटितच्छत्रकिरीटचामरम् ।
पृथुभिर्विषयार्पितैः पदैः स्थपुटं राक्षसगृध्रराजयोः ॥ ८३ ॥

चकितेक्षणवृत्तिभिः क्षणादभिमुक्तं वनदेवतागणैः ।
अपसृत्य ततः प्रदेशतः पुनरालोकयति स्म तद्वनम् ॥ ८४ ॥

स्वरुचा परिवेषितं विभुर्भुवि सीताचरणाम्बुजच्युतम् ।
अवलोकयति स्म नूपुरं झटिति भ्रष्टमिव ग्रहं दिवः ॥ ८५ ॥

परिगृह्य परिग्रहोचितं हृदि कृत्वा हृदयङ्गमं पुनः ।
व्यलपत् परिहृत्य दूरतः स तु सौमित्रिनवीकृतां धृतिम् ॥ ८६ ॥

अयि नूपुर! पादसंश्रयं किमु सा त्वामपि मामिवात्यजत् ।
तव सौम्य! सुवृत्तता तया सुदृशा किंनु ममेव नादृता ॥ ८७ ॥

अपि मय्यरविन्दलोचना करुणां नो शिथिलीकरिष्यति ।
क्षणमात्रपरोक्षवर्तिनि श्लथरागा दयितेऽपि हि स्त्रियः ॥ ८८ ॥

स्मरसि त्वमपि स्विदेकदा नगरोद्यानलतासु कासुचित् ।
मयि केलिपरे तिरोहिता तव वाचालतया निवेदिता ॥ ८९ ॥

घटय प्रथमं तयेह मां तदनु त्वं प्रतियोजयिष्यसे ।
चरणाभरण! प्रतीहि तन्न हि रामस्य मृषा भवेद् वचः ॥ ९० ॥

पुलिनेष्वनुगोदमुन्मदैः कलहंसैः क्रियते[1] सुखासिका ।
ध्रुवमद्य रुतैर्मनोरमैस्त्वयि मञ्जीर! विदूरगोचरे ॥ ९१ ॥

न तथा वलयादयो मम प्रियतामभ्युपयान्ति चेतसः ।
पदपद्ममराल! शिञ्जितैर्हृदयाह्लादनकृद्यथा भवान् ॥ ९२ ॥

---

१. 'श्रि' क. पाठः.

चरणाद् गलितस्य कोमलादिह वाचंयमता तवोचिता ।
न तथाप्यवकीर्णिता भवेदिममाभाष्य जनं सुहृत्तमम् ॥ ९३ ॥

यदिवा मदनुग्रहाय सा व्यसृजत् त्वां कृतवेदिनी सती ।
न वृथा तव तत्पदाम्बुजादुपपद्येत यतः परिच्युतिः ॥ ९४ ॥

अकृतात्मवादित्यनुक्षणं विलपन्तं तमचेतनं प्रति ।
पुनरप्यवबोध्य युक्तिभिः प्रकृतौ स्थापयति स्म लक्ष्मणः ॥ ९५ ॥

नयनाम्बुभिरुष्णनिर्गमैः परुषैर्निःश्वसितैश्च भूरिभिः ।
मसृणद्युति रत्ननूपुरं हृदयालम्बनतां नयन्मुहुः ॥ ९६ ॥

कपिकम्पितभूरिभूरुहं विपिनं तत् परिहृत्य सानुजः ।
तपनस्य करैर्नखंपचं क्षितितः प्रान्तरमत्यवाहयत् ॥ ९७ ॥

अथ कापि निशाचरी तदा परिगृह्योत्पतति स्म लक्ष्मणम् ।
असिपाणिरनङ्गदुर्भरां स च तां शूर्पणखामिवाकरोत् ॥ ९८ ॥

अथ तौ रभसेन वारितौ विकृताङ्गेन कबन्धरक्षसा ।
कुपितौ सहसैव तद्भुजावकृषातां करवालखण्डितौ ॥ ९९ ॥

मुनिशापनिशाचरीकृतं[1] कुणपं कृत्तभुजं विसृज्य तत् ।
उदगाद् दिवि कोऽपि पूरुषः स्पृहणीयाम्बरमाल्यभूषणः ॥ १०० ॥

इति ताववदच्च तापसं कमपि प्रागभिभूतवानहम् ।
अवलेपमुपाश्रितः प्रभो! न मदः कं नु विपत्सु पातयेत् ॥ १०१ ॥

प्रतिपद्य रुषा तपोनिधेर्विकृतामाकृतिमीदृशीं मया ।
भुजगोचरसत्त्ववृत्तिना धृतमायुर्धिगधर्मपद्धतिम् ॥ १०२ ॥

स मया नमता प्रसादितः प्रकृतिं स्वां प्रतिपन्नवान् पुनः ।
न हि हेतुकृतस्तपोभृतां सुचिरं तिष्ठति मन्युराशये ॥ १०३ ॥

तव दाशरथी यदा भुजावपदिश्य प्रहरिष्यतस्तदा ।
महिमानमवाप्स्यसि स्वकं गिरमित्याह स मां तपोनिधिः ॥ १०४ ॥

ननु पङ्क्तिरथात्मजौ युवां हृदयं मे भवतोः प्रसीदति ।
वपुषी दलिताञ्जनद्युती भृशमापादयतः शिवं दृशोः ॥ १०५ ॥

---

१. 'तः' क. पाठः.

गलितं मुनिशापकल्मषं हृदि मे संविदुदेति काचन ।
विचिनु त्वमुपायमात्मवाननुपायैर्नहि साध्यते विधिः ॥ १०६ ॥

यशसा प्रतिपत्स्यसे प्रियां नहि शोकाय मनः प्रदीयताम् ।
नियमेन न देहिनां सुखं न च दुःखं परिवृत्तिधर्मतः ॥ १०७ ॥

धनुरेतदिमे च सायकास्तव सौमित्रिरयं सहोदरः ।
विमलं शृणुमः पराक्रमं परिगीतं सुरसुन्दरीजनैः ॥ १०८ ॥

इति पुष्करनेत्र ! पुष्कलं निखिलं यद् द्विषतां निबर्हणम् ।
अधिगच्छ तथापि तं प्रभो ! सुहृदं यस्तव सर्वकर्मकृत् ॥ १०९ ॥

मतिमानिह कोऽपि वानरः शृणु पम्पातटशैलगोचरः ।
कुरु सख्यमनेन विश्वसन् नय विश्वासममुं च सादरः ॥ ११० ॥

स हि शक्रसुतेन वालिना बलिना पूर्वभुवा निराकृतः ।
तनयस्तपनस्य कर्मणां सहकारी भवतो भविष्यति ॥ १११ ॥

उपकारि न वालिसौहृदं तव मन्ये न स कृत्यवान् यतः ।
असमव्यसनेषु न क्वचित् पणबन्धः खलु कर्मसिद्धये ॥ ११२ ॥

सचिवैः स चतुर्भिरन्वितः कृतकृत्यस्त्वदनुग्रहेण तम् ।
त्रिदशैरपि दुष्करं विधिं प्लवगानामधिपः कारिष्यते ॥ ११३ ॥

न पुनः कपिरित्युपेक्ष्यतां स हि सर्वस्य गुणस्य भाजनम् ।
गिरमित्युपदिश्य जग्मिवान् मुदितस्तुम्बुरुरम्बरोदरम् ॥ ११४ ॥

स तु तद्वचनं महार्थवद्धितमिष्टं विनिधाय चेतसि ।
सुरभिप्रसवैर्महीरुहामथ पम्पावनमाप पावनम् ॥ ११५ ॥

श्रमणां चिरजीविनीं सतीं शबरीमेत्य तया कृतार्हणः ।
नितरामभजद् रघूद्वहः प्रमदं मातृविलोकनोचितम् ॥ ११६ ॥

अथ सा विदुषी तपस्विनां कथयामास मतङ्गशिष्यताम् ।
व्रजतां महिमानमद्भुतं पुनरेषां च दिवोऽधिरोहणम् ॥ ११७ ॥

प्रतिपाद्य घटाजिनादिभिः परिपूर्णं विधिवत् तदाश्रमम् ।
सुहृदं च निवेद्य तापनिं नचिरादन्वगमत् तपोधनान् ॥ ११८ ॥

ततः पम्पातीरे सुरभिकुसुमाभ्यन्तरगल-
न्मधुश्रीवक्षामभ्रमरकृतझङ्कारमुखरे ।
भृशं सुग्रीवेण प्रसितहृदयस्तुल्यविपदा
स सौमित्रिश्चक्रे वसतिमविता सर्वजगताम् ॥ ११९ ॥

इति रघुवीरचरिते सप्तमः सर्गः ।

---

## अथाष्टमः सर्गः ।

मतङ्गाश्रममासाद्य सिद्ध्या प्रतिपादितम् ।
आशासानः स्थितिं चक्रे रामः सुग्रीवसङ्गमम् ॥ १ ॥

उल्लसत्पद्मकिञ्जल्कपरागच्छुरिताम्भसम् ।
कुङ्कुमेनेव संसृष्टां तत्र पम्पामवैक्षत ॥ २ ॥

उद्यतस्य दिवं प्राप्तुं निरोद्धुमिव तद्गतिम् ।
महीभृतो माल्यवतः पादाश्लेषं वितन्वतीम् ॥ ३ ॥

वीचिभिर्भ्रूलतां पद्मैः पाणिपादमुखेक्षणम् ।
आवर्तैर्नाभिविन्यासं कोकद्वन्द्वैः स्तनश्रियम् ॥ ४ ॥

द्विरेफसार्थैः कबरीं कुमुदैः स्मितविभ्रमम् ।
दर्शं दर्शं मुहुस्तस्याः प्रियाया निर्विवेश सः ॥ ५ ॥

मदमन्थरयातेषु राजहंसेषु तन्मनः ।
न तृप्तिमाप निर्विष्टप्रियाखेलगतिक्रमम् ॥ ६ ॥

रथाङ्गनाम्नां द्वन्द्वानि मुखेषु ददतां मिथः ।
पद्मकेसरशल्कानि पश्यन्नुत्कण्ठितोऽभवत् ॥ ७ ॥

द्रुमानालक्ष्य कान्ताभिर्लताभिरभिवेष्टितान् ।
प्रियाविश्लिष्टमात्मानमनुशोचंस्तताम सः ॥ ८ ॥

निरीक्ष्य पारे पम्पायाः पारिभद्रं विकस्वरम् ।
सस्मार विद्रुमाताम्रं प्रियाया दशनच्छदम् ॥ ९ ॥

कुन्दस्मेरेषु तीरेषु व्यापारितविलोचनः ।
प्रतिष्ठामनयच्चित्ते प्रियायाः स्मितचन्द्रिकाम् ॥ १० ॥

कम्पं पम्पातरङ्गाणामातन्वानः शनैः शनैः ।
गन्धहारं सरोजानां पवनस्तमसेवत ॥ ११ ॥

न्यक्कृतत्रिदशोद्यानं तं प्रदेशं प्रियां विना ।
स संश्रितः कृपोत्कम्पौ धीरोऽपि प्रतिपेदिवान् ॥ १२ ॥

अथोपत्यकया यान्तमृश्यमूकस्य भूभृतः ।
ददर्श रामं सुग्रीवः सानुजं सानुगोचरः ॥ १३ ॥

तस्य या वालिनो भीतिः शरणं काप्यतन्वतः ।
सा तयोर्दृष्टयोः सद्यः सहस्रगुणिताभवत् ॥ १४ ॥

मतङ्गशापाच्छैलोऽयं हन्तुर्भ्रातुरसञ्चरः ।
निश्चित्येति धिया वासमस्मिन्नकरवं चिरम् ॥ १५ ॥

राजतन्त्रं बहूपायमनृजुच्छन्नकञ्चुकम् ।
आभ्यां प्रच्छन्नचारिभ्यां बाधा मय्युपपत्स्यते ॥ १६ ॥

इति सञ्चिन्त्य चित्तेन चित्तवानपि तापनिः ।
विहस्तस्तत्र वित्रासात् स्थातुं गन्तुं च नाशकत् ॥ १७ ॥

उत्प्लुत्योच्चैरवप्लुत्य निकुञ्जेषु निलीय च ।
वेशं वेशं प्रतिगुहं कापेयं प्रकटं व्यधात् ॥ १८ ॥

स चतुर्भिः सहचरैरन्वितः समभीतिभिः ।
तमद्रिमसकृद् भीतः पर्यक्रामत् समन्ततः ॥ १९ ॥

उद्भ्रान्तन्यङ्मुखं पश्यन् सालात् सालान्तरं व्रजन् ।
शब्दायमानश्चीत्कारैः किं नाम न चकार सः ॥ २० ॥

अवस्थाप्य ततश्चित्तं प्रकृतौ भृशकातरम् ।
मतिमन्तं हनूमन्तं मतिमानित्यभाषत ॥ २१ ॥

गच्छ जानीहि कावेतौ भीतिप्रीतिकृतौ मम ।
चारौ वा तापसौ वेति व्यवसायं च हृद्गतम् ॥ २२ ॥

---

१. 'वी', २. 'गन्तुं स्थातुं च' ख. पाठः.

अवधार्याथ तद्वाक्यं कामरूपः समारुतिः ।
भिक्षुरूपेण सञ्छन्नस्तयोरभ्याशमभ्यगात् ॥ २३ ॥

शङ्खचक्रधनुर्मत्स्यैर्मुद्रितानि पदानि सः ।
मार्गपांसुषु संलक्ष्य मेने तावतिमानुषौ ॥ २४ ॥

अञ्जनच्छेदसौभाग्यं व्यञ्जयन्तीं वपुःश्रियम् ।
तेजांसि च समग्राणि प्रागल्भीमप्यनन्यगाम् ॥ २५ ॥

संविधानं च गात्राणां दृढश्लक्ष्णममेदसा ।
लक्षीकृत्य तयोरक्ष्णोरूचिवानिति विस्मितः ॥ २६ ॥

मन्ये निखिलराजन्यमौलिनीराजितानि वाम् ।
अर्हन्ति पदपद्मानि मणिपीठाधिरोहणम् ॥ २७ ॥

व्यक्तस्निग्धोर्ध्वरेखाणि सङ्क्रान्तान्यध्वरेणुषु ।
इमानि तललक्ष्माणि दुर्लभानि हरावपि ॥ २८ ॥

युष्मत्प्रपदसंस्थानं वीक्ष्य व्रीलादवाङ्मुखैः ।
अगाधे सलिले मन्ये निमग्नं नाम कच्छपैः ॥ २९ ॥

शमं केतकगर्भाणां सुभगम्मन्यता व्रजेत् ।
जङ्घानुपूर्व्या भवतोरभिभूता महौजसोः ॥ ३० ॥

नूनं जानूनि जाने वां प्रयातानि समुद्गताम् ।
गुणादर्शनिधानाय ये जगत्पालनक्षमाः ॥ ३१ ॥

दम्भं मरकतस्तम्भः पश्यन्नूरुद्वयीमिमाम् ।
परस्परोपमेयां वां तावत् त्यजतु दूरतः ॥ ३२ ॥

इमे वां जघने पीने मृदुदिव्यांशुकोचिते ।
अकिञ्चनेषु सुलभं वल्कलं बिभृतः कथम् ॥ ३३ ॥

अस्त्येव पद्मं नाभौ वां छन्नं मुखशशित्विषा ।
तदुद्गतां द्विरेफालीं शङ्के रोमावलीमिमाम् ॥ ३४ ॥

प्रमृष्टपार्श्वे युवयोर्व्यायामक्रशितोदरे ।
मध्ये विनिहिते नेत्रे कथमुत्पाटयेज्जनः ॥ ३५ ॥

पराध्यमणिहाराई वक्षः क्रीडाजिरं श्रियः ।
एतदास्वाद्य सवतोः प्रसीदति मनो मम ॥ ३६ ॥

भुजङ्गभोगभीमैर्वां भुजैराजानुलम्बिभिः ।
उपन्नैरात्तगन्धानां कोऽर्थः कस्य न साध्यते ॥ ३७ ॥

प्रकोष्ठे लक्ष्यते वामे चित्रमेकतरस्य वाम् ।
धनुर्ज्याघातपरुषः किणोऽयमचिरोद्भवः ॥ ३८ ॥

सिंहसंहननस्कन्धौ! कण्ठे कम्बुत्रपाकरे ।
स्मेरं रत्नांशुभिर्निष्कं कथं नामुञ्चथः शुभम् ॥ ३९ ॥

वन्धुजीवरुचिस्तेनः प्रभासन्ध्यायिताम्बरः ।
युवयोर्बिम्बविब्बोकेष्वधरः शिथिलादरः ॥ ४० ॥

दन्तमौक्तिकनिष्ठ्यूता मनःकुमुदकौमुदी ।
कान्तिर्गङ्गाम्बुगौरी वामेषा स्नपयतीव माम् ॥ ४१ ॥

अनर्घरत्नताटङ्कप्रभापूरैर्विसर्पिभिः ।
परभागं न धत्ते किं युवयोर्गण्डमण्डली ॥ ४२ ॥

नन्दनोद्यानवास्तव्यशारिकातुण्डविभ्रमम् ।
पर्वण्यर्वाचि कुर्वाणे नासिके वां विराजतः ॥ ४३ ॥

युष्मन्नयनवार्तायां दूरे पद्मोत्पलश्रियः ।
जलेषु स्थितिमासाद्य तानि जीवन्त्वपत्रपम् ॥ ४४ ॥

न परं प्रियवादोऽयं युष्मद्भ्रूभङ्गविभ्रमः ।
क्षमते किङ्करीकर्तुं पतिं विश्वसृजामपि ॥ ४५ ॥

आभिर्ललाटरेखाभिर्व्रजन्तीभिर्विशालताम् ।
सर्वातिशायि भवतोर्व्यज्यते दैर्घ्यमायुषः ॥ ४६ ॥

कलमाग्रपिशङ्गीनां जटानां वीक्ष्य वैभवम् ।
शिरसा लालितानां वां किरीटमनुशोचति ॥ ४७ ॥

---

१. 'ख' ख. पाठः.

उद्यच्छति शिरो नन्तुं हस्तौ मे बन्धुमञ्जलिम्।
जिह्वा स्तोतुं मनः स्मर्तुं बाहू चालिङ्गितुं युवाम् ॥ ४८ ॥

यस्मिन् प्रसादः स्तोकोऽपि भवतोर्भाग्यभाजनम्।
मन्ये स श्लाघ्यते लोके षड्भिर्विरहितः पुमान् ॥ ४९ ॥

आशास्ते मे मनस्तावन्निर्ज्ञातुं कौ युवामिति।
प्रणयादनुयोक्तुं तुं जिह्वा कुण्ठत्वमृच्छति ॥ ५० ॥

इत्युक्ते तेन सौमित्रिर्दृशा रामेण चोदितः।
स्वसम्भवादि यद् वृत्तं सर्वं तस्मै न्यवेदयत् ॥ ५१ ॥

स तु विश्वासमापन्नस्तस्य वाचा विशुद्धया।
मस्करित्वं परित्यज्य प्राग्रूपमभजत् कपिः ॥ ५२ ॥

स वालिना निरस्तस्य सुग्रीवस्य व्यपेक्षितम्।
सचिवं तस्य चात्मानमाप्तमाप्त्यै व्यजिज्ञपत् ॥ ५३ ॥

प्रत्ययं प्राप्य तौ तस्मिन् पावनौ लोकपावनौ।
प्रार्थयामासतुः सख्यं तापनौ शत्रुतापनौ ॥ ५४ ॥

अमूकविक्रमस्तस्मादृश्यमूकं निनाय तौ।
भ्रातुस्त्रस्तः स यत्रास्ते सुग्रीवो मतिमत्तमः ॥ ५५ ॥

मालेयस्य प्रवालेषु रचितेषु हनूमता।
निषसाद तथा रामः सुग्रीवं च न्यवेशयत् ॥ ५६ ॥

अविज्ञातार्थताम्लानं वानरेन्द्रं स मारुतिः।
उपगम्य यथावृत्तमुपादिशदुपांशु तौ ॥ ५७ ॥

सम्भावयन्तावन्योन्यं प्रसादामलया दृशा।
सिद्धमित्येव मेनाते तावुभौ स्वं चिकीर्षितम् ॥ ५८ ॥

अथ प्रथमसंसृष्टेऽप्याश्रितः प्रत्ययं विभौ।
खिन्नं कृतार्थयामास कपिरात्मानमात्मवान् ॥ ५९ ॥

आस्वाद्यास्वाद्य नेत्राभ्यां मुहुरानन्दवारिभिः।
शिशिरैः परिपूर्णाभ्यामित्युवाच स राघवम् ॥ ६० ॥

---

१. 'तं' क. पाठः. २. 'च' ख. पाठः.

आपद्भिरभिभूतानां शोच्या भवति भारती ।
चपलानां प्रकृत्यैव मादृशां तु विशेषतः ॥ ६१ ॥

यस्मिन् भवेत् प्रलपितं दीनानामप्रतिक्रियम् ।
दौरात्म्याच्छक्त्यभावाद् वा तत्र तूर्ष्णींस्थितिर्वरम् ॥ ६२ ॥

भवादृशेषु दीनानामुचितं परिदेवितम् ।
अनुकम्पाममोघां ये हृदये तेषु बिभ्रति ॥ ६३ ॥

पुंसामकृत्रिमस्नेहं मित्रं दुर्लभमापदि ।
विशेषेण च तत् तावन्नियत्या मह्यमर्पितम् ॥ ६४ ॥

कुलसिद्धेषु मित्रेषु विकलेषु विपत्तिभिः ।
उपकाराः प्रयुक्ता ये ते स्युरापेक्षिका मिथः ॥ ६५ ॥

पतितान् विनिपातेषु शरण्यः शरणागतान् ।
पशूनिवान्धकूपेषु यस्तारयति स प्रभुः ॥ ६६ ॥

मा भूत् प्रत्युपकर्तेति मतिस्ते कपिनामुना ।
यशश्चन्द्रातपस्मेरं पुनरप्युपबृंहय ॥ ६७ ॥

भुजाबलेन स्वेनैव विनिवार्य सुरासुरान् ।
येन प्रागेकवीरेण मथितः क्षीरसागरः ॥ ६८ ॥

प्राप्य प्रभातवेलायां येन दूरीकृतश्रमम् ।
चतुस्सागरवेलासु सन्ध्या नित्यमुपास्यते ॥ ६९ ॥

मायाबलमदोद्रिक्तौ दैत्यौ मायाविदुन्दुभी ।
यो जगत्यप्रतिद्वन्द्वौ द्वौ पञ्चत्वमजीगमत् ॥ ७० ॥

लीलान्दोलितकैलासः पौलस्त्यो यस्तवाघकृत् ।
यद्वालसुखशय्यायामशेत बहुवत्सरम् ॥ ७१ ॥

सम्मुखीनस्य सङ्ग्रामे साक्षादपि बलद्विषः ।
प्राणितस्तपसा तेजः स्वतेजसि जुहोति यः ॥ ७२ ॥

धर्मादचलतो[२] यस्य योगिनस्तेजसां निधेः ।
युयुत्सया पुरः स्थातुं त्रिलोक्यां कोऽपि न क्षमः ॥ ७३ ॥

---

१. 'पा', २. 'तस्तस्य' क. पाठः.

एकोदरोद्भवस्नेहाद् वालिना तेन वर्धितः ।
असंविभक्तमैश्वर्यं प्रेम्णाहमनुभावितः ॥ ७४ ॥
भ्रातृसंश्लेषसम्पत्तिराशास्या सर्वदा नृणाम् ।
मिथः सुखबलासक्तिर्यया सैकान्तदुर्लभा ॥ ७५ ॥
स मे माता पिता स्वामी हितकृत् प्रियकृद् गुरुः ।
अहं तु तस्य सचिवो दूतः कर्मान्तिकोऽनुगः ॥ ७६ ॥
चिन्त्यमानेष्वगाधेषु राजतन्त्रेषु मन्त्रिभिः ।
सुग्रीवः किमु तत्रेति मां तान् पृच्छति वत्सलः ॥ ७७ ॥
भ्रातुः प्रियतया तेषां कुमारस्याङ्गदस्य च ।
मद्वृत्त्या च विधेयेषु गतोऽहमुपसेव्यताम् ॥ ७८ ॥
विश्वाससुरभिः स्नेहस्तस्य मय्यङ्गदे पुनः ।
एवं बहुतिथः कालो गतो नावेकचेतसोः ॥ ७९ ॥
अथैकदा मे भावित्वाद् दैवे विपरिवर्तिनि ।
स मायावी समाह्वास्त समराय ममाग्रजम् ॥ ८० ॥
श्रुत्वा गर्वध्वनिं तस्मिन् निष्क्रामति मया सह ।
स विवेश भिया धावन् पातालप्रतिमं बिलम् ॥ ८१ ॥
तमन्वगाविशद् भ्राता मां विधाय गुहामुखे ।
अहमप्यास्थितस्तत्र तस्याज्ञां परिपालयन् ॥ ८२ ॥
अन्विच्छतस्तमस्यन्धे तं निलीनं ततस्ततः ।
अगृहीतार्थनेत्रस्य कोऽपि कालोऽत्यवर्तत ॥ ८३ ॥
किमप्यशिवमाशङ्क्य भ्रातुर्दैत्येन भावितम् ।
द्वारं पिधाय शैलेन किष्किन्धां प्राविशं शुचा ॥ ८४ ॥
अनिच्छन्नेव शोकेन सङ्गतैर्मौलमन्त्रिभिः ।
अहमात्मविनाशाय तत्पदे लघु कारितः ॥ ८५ ॥
अल्पेनापि निमित्तेन सौभ्रात्रं भिद्यते नृणाम् ।
पुनस्तत्प्रतिसन्धानं महतापि न लभ्यते ॥ ८६ ॥

१. 'त', २, 'लः । वि' क. पाठः.

भ्राता बिलोदरे भ्रान्त्वा तं गृहीत्वा निगृह्य च ।
क्षिप्त्वा दूरं पिधानाद्रिं निर्यन् मां तत्र नैक्षत ॥ ८७ ॥

स मे विषमतां मत्वा हिक्काभिः पूरयन् नभः ।
प्रत्यवाप पुरीं रोषाद् दृग्भ्यामग्निमिवोद्गमन् ॥ ८८ ॥

तस्य निर्घोषमाकर्ण्य वेगादापततः पुरीम् ।
अभिषेककृतो ये मे निलीना दिक्षु दिक्षु ते ॥ ८९ ॥

तं कृतान्तमिवालक्ष्य क्षमस्व भ्रातरक्रमम् ।
कृतं मयेति प्रणमन् व्यलपं तन्न सोऽग्रहीत् ॥ ९० ॥

स मामुन्मथ्य तेजस्वी क्षेत्रियं वैरमुद्वहन् ।
सौभ्रात्रं दुस्त्यजं हित्वा स्वपुरान्निरकासयत् ॥ ९१ ॥

सोदर्यस्नेहमत्यक्तुं[1] दुस्त्यजं लक्ष्मणाग्रज ! ।
सान्त्वपूर्वं महत् कर्म मया तस्मिन् कृतं बहु ॥ ९२ ॥

प्रणतं[2] प्रार्थितं[3] छन्नं प्रसादार्थमुपोपितम्[4] ।
नलतारसुषेणाद्यैराप्तैरावेदितं[5] मिथः ॥ ९३ ॥

किञ्च दूरमपक्रान्तस्त्रस्तस्तस्माज्जिघांसतः[6] ।
पर्यटन् पृथिवीं कृत्स्नां त्रातारं नास्मि दृष्टवान् ॥ ९४ ॥

मतङ्गस्य मुनेः शापाद् वालिनो ऽगम्यभूर्गिरिः ।
अहं तत्प्रत्ययेनैव वीतभीतिरिह स्थितः ॥ ९५ ॥

एभिः सजातिभिः स्निग्धैः समं ध्यायन्निमां दशाम् ।
न पारमवगच्छामि फलपत्रतृणाशनः ॥ ९६ ॥

दैवादेवं निवसतोर्विषमं प्राप्य दण्डके ।
युवयोर्वृत्तमालोक्य शोचामि भ्रातृवत्सल[7] ! ॥ ९७ ॥

मन्ये नात्यन्तमात्मानं नियत्यामपराधिनम् ।
अस्मिन् काले महाबाहो ! दर्शितस्त्वं तया यतः ॥ ९८ ॥

---

१. 'न्तं' ख. पाठः, २. 'तः', ३. 'तजनः प्र', ४, ५. 'तः' क. पाठः. ६. 'न्तत्रस्तं तस्मा', ७. 'लः' ख. पाठः

मनसः स्थिरता नाम नोत्पाद्या करणान्तरैः ।
या कामधेनुरर्थानां यस्यास्त्वमसि संश्रयः ॥ ९९ ॥

पृथिव्यां नवखण्डायां पुनर्द्वीपान्तरेष्वपि ।
सागरेषु च सर्वेषु विचेष्ये जनकात्मजाम् ॥ १०० ॥

पूर्यते वचसां पूरैः कृतार्थीकुरु मामिह ।
नहि कृत्यवतां चेतः प्रायः कर्मान्तरक्षमम् ॥ १०१ ॥

विज्ञाप्येति स्ववृत्तान्तं रामस्यार्पितवान् पुरः ।
भूषणान्युत्तरीयं च प्राक्षिपद् यानि मैथिली ॥ १०२ ॥

वीक्ष्य तानि परार्घ्याणि निर्विष्टानि तया पुरो ।
रामः प्रकृत्या धीरोऽपि भेजे कामपि विक्रियाम् ॥ १०३ ॥

प्रत्यापत्तिं धृतिं नीत्वा पुनरप्युन्नतेहितः ।
अर्थवत् प्रमितं वाक्यमित्युवाच रघूद्वहः ॥ १०४ ॥

श्रुता मया दशेयं ते धियः खेदोऽपनीयताम् ।
तावत् त्वमाश्रितोऽसीति न मां धिन्वन्ति तद्गुणाः ॥ १०५ ॥

समाश्वसिहि सुग्रीव! शृणु मे सूनृतं वचः ।
नचिराद् रामबाणस्त्वां कृच्छ्रादुत्तारयिष्यति ॥ १०६ ॥

हृतदारस्य मे वाणी नैवादरपदं नृणाम् ।
निर्मक्षिकं तथापि त्वं साम्राज्यमधु पास्यसि ॥ १०७ ॥

तुल्यापत्तिषु मुख्याय सख्याय स्पृहये त्वया ।
स्थिरीकृतेन येनावां क्रियासिद्धिं लभावहे ॥ १०८ ॥

इत्युक्तवति काकुत्स्थे वचः प्रकृतसाधकम् ।
भृशमाप्यायितः स्वान्ते जगाद पवनात्मजः ॥ १०९ ॥

युज्यते त्वयि युक्तज्ञे वागियं वाग्विदां वर! ।
जाग्रतां जगतां हेतोस्त्वादृशां किमशोभनम् ॥ ११० ॥

अपदानफलोदर्कं स्वराज्यादवरोपणम् ।
त्वादृशां मद्विधानां तु दौर्गत्यायैव केवलम् ॥ १११ ॥

---

१. 'ति', २. 'म् ॥ सवि', ३. 'ष्य स्व', ४. 'यानि प्रा', ५. 'रः', ६. 'ते' क. पाठः.

शीलव्यसनसाम्ये हि पुंसां सख्यं प्रशस्यते ।
अत्र नान्वेति तद् यस्माद् धीरोदात्तोऽस्त्ययं कपिः ॥ ११२ ॥

सर्वातीतस्य वशिनस्तव शक्तिमतः प्रभो ! ।
भैक्षचर्येव रुद्रस्य शोभते वनवासिता ॥ ११३ ॥

तिरश्चः स्मर नः सौम्य ! साहसार्थान् वनौकसः ।
विश्वासस्तव किं जज्ञे जटायुषि जलायुषि ॥ ११४ ॥

अहो सुजीवितं तस्य तिरश्चोऽपि जटायुषः ।
यश्चलैरसुभिः कीर्त्तिं त्वदर्थे शाश्वतीमगात् ॥ ११५ ॥

स्फीतचापलसम्पर्के मर्कटेऽस्मिन् प्रसारिता ।
केवला ते कृपावल्ली फलं बध्नातु माचिरम् ॥ ११६ ॥

इत्युक्त्वोपरते तस्मिन् वाक्प्रवीणे हनूमति ।
युक्तस्तस्योपकाराय जगाद भरताग्रजः ॥ ११७ ॥

सुहृदौ तौ हि यौ लोके परस्परकृताश्रयौ ।
वंशस्थितिं वितन्वानौ वेश्ममल्लाविवोच्छ्रितौ ॥ ११८ ॥

सवितुस्त्वं सुतः साक्षात् तद्वंश्या वयमप्यतः ।
प्रागेवास्त्येव सम्बन्धः स पारोक्ष्येण विश्लथः ॥ ११९ ॥

घटितं दिष्टयोगेन तन्नवीकृत्य साम्प्रतम् ।
त्वया तत् सख्यमिच्छामि यस्य साक्षी हुताशनः ॥ १२० ॥

मारुते! चारु ते कर्म येनावामिह योजितौ ।
सचिवे त्वयि विन्यस्तं सुग्रीवस्यास्य काङ्क्षितम् ॥ १२१ ॥

दारुसङ्घर्षजं तावदुपपादय पावकम् ।
यत्साक्षि नौ भवेत् सख्यं स्थिरं कल्पान्तरेष्वपि ॥ १२२ ॥

इत्याज्ञयाहृतं वह्निं प्रमाणीकृत्य कृत्यवित् ।
द्रढयामास तत् सख्यं फलदं यद् द्वयोरपि ॥ १२३ ॥

सप्तसालविभेदेन स्पष्टविक्रमसम्पदा ।
नियुक्तस्तेन सुग्रीवः समरायाहृताग्रजम् ॥ १२४ ॥

शुश्रुवानयथापूर्वं तर्जिताशनि गर्जितम् ।
तस्य रामानुशिष्टस्य वाली मन्दमदोऽभवत् ॥ १२५ ॥

त्वत्तः पराजितः पूर्वं सुग्रीवस्तावदागतः ।
दर्पादाह्वयते तेन शङ्का सुमहती मम ॥ १२६ ॥

इति वाचा निरुद्धोऽपि तारया साश्रुधारया ।
पुरान्निरगमद् वाली पादन्यासोद्धुतावनिः ॥ १२७ ॥

अदृष्टचरमालक्ष्य प्रभावं तस्य दुर्धरम् ।
तत्प्राप्तावुद्यतां मेने वासविः स्वां जयश्रियम् ॥ १२८ ॥

रामसुत्रामदत्ताभ्यां स्रग्भ्यां विहितभूषणौ ।
युयुधाते ससंरम्भौ तावन्योन्यजिघांसया ॥ १२९ ॥

रामः पथा निगूढेन दर्शितेन हनूमता ।
सज्जः सज्यं धनुः कृत्वा सालमूलमुपासदत् ॥ १३० ॥

सर्वाकारस्वविश्वस्तसुग्रीवक्षेमहेतवे ।
विशुद्धधर्मैकनिष्ठोऽपि चक्रे तद् कर्म दुर्वचम् ॥ १३१ ॥

सन्धाय सायकं चापे रिपूणामन्तसाधकम् ।
प्रजिघाय तिरोभूतः स जिघांसुः कपीश्वरे ॥ १३२ ॥

अथ प्रलयदम्भोलिदम्भोत्पाटनलम्पटः ।
स वक्षसि निमग्नोऽभूद् वालिनः शौर्यशालिनः ॥ १३३ ॥

तथा गम्भीरसत्त्वोऽपि स कपीनामधीश्वरः ।
रामस्यैकेन बाणेन हृदि विद्धोऽपतद् भुवि ॥ १३४ ॥

ददर्श चाविदूरे तं रामं राजीवलोचनम् ।
स्वस्मिन्नत्याहितं कर्म स्थितं कृत्वा निरागसि ॥ १३५ ॥

इतः परस्तात् पुत्रो मे रक्षितव्योऽयमङ्गदः ।
तारा चेत्युक्तवान् वाचं ददौ भ्रात्रे निजां श्रियम् ॥ १३६ ॥

कालेन कालिते तस्मिन् महावीरे रघूत्तमः ।
मौलैः सार्धं स सुग्रीवं कपिराज्येऽभ्यषेचयत् ॥ १३७ ॥

राजभावेन सम्पन्नो मित्र्यायितमण्डलः ।
दूरादहिभयान्मुक्तस्तारापतिररोचत ॥ १३८ ॥

भ्रात्रा त्यक्तस्तथापन्नः सुग्रीवः परमां श्रियम् ।
लेभे रामप्रसादेन प्रार्थ्यो हि महदाश्रयः ॥ १३९ ॥

कृताभिषेकमङ्गलं सहस्रभानुनन्दनम् ।
निरीक्ष्य वालिविप्लवं न सस्मरुः प्लवङ्गमाः ॥ १४० ॥

नभः प्रत्यासन्नं न पुनरयमुद्योगसमय-
ऋतुर्यासीमस्मिञ्छिखरिणि ससौमित्रिरुषितः ।
प्रतीक्षे त्वत्प्राप्तिं शरदुपगमं चेत्यनुवदन्
प्रवेष्टुं किष्किन्धां स विभुरनुमेने कपिवरम् ॥ १४१ ॥

तदनु कपीनां नेता पर्याप्तमनोरथः पुरीं गत्वा ।
भेजे भोगान् दिव्यान् काकुत्स्थाज्ञां दृढं दधत् स्वान्ते ॥ १४२ ॥

इत्थं कृत्वा जगदुपकृतौ जागृविः संश्रितार्थं
शृङ्गोत्सङ्गस्खलितजलदं माल्यवन्तं समेत्य ।
कालापेक्षामुकुलितमतिर्जानकीयोगमुच्चै-
राशासानो लघु रघुपतिस्तत्र वासं वितेने ॥ १४३ ॥

इति रघुवीरचरितेऽष्टमः सर्गः ।

---

## अथ नवमः सर्गः ।

अथ विचित्रमणिद्युतिमञ्जरीकवलिताखिलदिग्वलयं विभुः ।
हिमगिरेरपि दर्पमसारतां नगमयं गमयन्तमवैक्षत ॥ १ ॥

क्वचन विभ्रतमद्भुतपत्रिकां तटनिलीनमरालकरालिताम् ।
घनमधुद्रवमेदुरसौरभां कमलिनीमलिनीलितपङ्कजाम् ॥ २ ॥

---

१. 'भस्यासन्नेऽस्मिन् न' क. पाठः. २. 'पदं प्र' ख. पाठः.

क्वचन भीमगुहागतकेसरिप्रहितहुंकृतिभीतमतङ्गजम् ।
तटशयालुवलाहकगर्जितत्रसदहिं(स्रंस)दाहिंस्रमृगद्विजम् ॥ ३ ॥

शिखरमस्तकनिस्तुषभासुरस्फटिकरत्नमरीचिभिरुन्मुखैः ।
मरतकच्छवि लक्ष्म हिमत्विषः शशमयं शमयन्तमनुक्षपम् ॥ ४ ॥

उपरिभूतलपातुकनिर्झरस्रुतिभिरुद्गलिताभिरितस्ततः ।
रजतपट्टविडम्बितकान्तिभिः सिततमं ततमञ्जुलवीचिभिः ॥ ५ ॥

श्रुतिसुखोद्गमकिन्नरचारणप्रहितमूर्छनमप्सरसां गणैः ।
विहितलास्यविशेषमनुस्वनच्छुकपिकं कपिकम्पितपादपम् ॥ ६ ॥

प्रकृतसान्ध्यमनोकहपल्लवैस्तिमिरितं क्वचिदिन्द्रमणित्विषा ।
परिणतद्विपदन्तपरिक्षतिस्थपुटितं पुटितं क्व च सानुभिः ॥ ७ ॥

दृशि विधाय तमद्रिवरं प्रियाविरहसम्भृतदुर्जरहृज्ज्वरः ।
अवददित्यपहस्तितकान्तिमान् गजगतिर्जगति श्रुतपौरुषः ॥ ८ ॥

किसलयाङ्गुलिभिः प्रतितर्जयन् मधुपझङ्कृतिहुङ्कृतिमुत्सृजन् ।
परिहसन् कुसुमैरपदं गिरां क्रममसौ मम सौति महागिरिः ॥ ९ ॥

न गिरिरेष पुरातनराक्षसः कृतपलाशकुलोन्नतिरानयन् ।
हृदि रुजं निजवंश्यदशाननप्रियतयायतया मम माल्यवान् ॥ १० ॥

अपकृतं किमगोत्तम ! ते मया कमुपकारमधत्त च मन्मथः ।
सृजसि यत् कुसुमास्त्रपरम्परां प्रभवतो भवतो नहि तत् क्षमम् ॥ ११ ॥

त्वं ब्रह्मणाश्रितिरभूः किल पूर्वकाले
त्वामाश्रितस्तपनसूनुरवाप लक्ष्मीम् ।
मामप्यगेन्द्र ! घटय प्रिययार्तिभाजा-
मभ्युन्नताश्रयगुणः खलु कामधेनुः ॥ १२ ॥

विचकिल ! चकितमृगाक्षीं दर्शय मे दर्शनीयतिलकमुखीम् ।
तव सुरभिकुसुमजातं तस्याः केशैः प्रसाधयिष्यामि ॥ १३ ॥

रघुवर ! तव मास्म भूद् विषादः प्रियतमया नचिरेण योक्ष्यसे त्वम् ।
इदमभिनयतीव वल्लरीयं वरवनिताकरकोमलैः प्रवालैः ॥ १४ ॥

प्राणेभ्योऽपि गरीयसी सहचरी सीता क ते वर्तते
श्यामा मां मुकुलैरियं पुलकिता गाढं समालिङ्गति ।
क्षीणोऽस्म्यस्मि कृतार्थतामुपगतः पश्यावयोरन्तरं
हन्तेत्थं सहकार एष हसति स्मेरैः प्रसूनोद्गमैः ॥ १६ ॥

एते बत प्रियतमाविरहापकल्यं भामीभ्रमीभ्रमालिभिर्विहितार्तनादाः ।
मुञ्चन्ति बाष्पसलिलानि महीरुहोऽपि पुष्पोदरस्रुतमरन्दमिषेण नूनम् ॥

इति बहुविधवाचि रामभद्रे दधति मनः सविषादशोकमूकम् ।
किमपि किमपि चिन्तयाञ्चकार श्रुतिनिपुणोऽथ सुमित्रया प्रसूतः ॥१७॥

दिक्कूलङ्कषगर्जितैः कवलितव्योमावकाशा घनै-
र्गाढाश्लेषविधेः सरोरुहदृशां यूनां च सन्धापनी ।
ग्रीष्मोष्मप्रतिपन्नवार्धकभरात्तारुण्यविश्राणिनी
वेला मन्मथवैभवैकशरणं प्रावर्तत प्रावृषः ॥ १८ ॥

हर्म्यस्थलानि मणिदर्पणनिस्तलानि
ज्योत्स्नानुलेपसुभगासु विभावरीषु ।
जुष्टानि नूतनघनाम्बुजडीकृतानि
शीतालवः प्रियगृहा विजहुर्युवानः ॥ १९ ॥

वरयुवतिनितम्बाडम्बराण्यापगानां
गलितजलदुकूलान्याश्रिताः सैकतानि ।
घनसमयविरक्ताः स्वैरमापृच्छ्य हंसाः
शिवसलिलनिषेव्यं मानसं प्राप्तवन्तः ॥ २० ॥

कैरवकेसरधूलीपालीकवचितमनासिजयोधसहायाः ।
सौरभसौहृदरसिका एते झटिति हि विक्रान्तिमुपेता वाताः ॥ २१ ॥

प्रत्युद्गताः केकिभिरार्तिभाजामाप्यायकाश्चातकपोतकानाम् ।
प्रवर्तकाः केतकसौरभाणामाविर्बभूवुर्नववारिवाहाः ॥ २२ ॥

घनैरुत्सृष्टानां प्रथमपयसां प्राप्य विभवं
क्षितिर्बाष्पैरुष्णैः समसुदगिरद्या यः स्वसमये ।

1. 'रः' ख. पाठः.

न तावत् किं चक्रुः स्मरविजयहेतोर्जगति ता
विकोशाः कन्दल्यः पथिकहृदयग्रन्थिभिदुराः ॥ २३ ॥

लघुमधुकुसुमं निषिध्य नीपं सुरभितमामनु मालतीं प्रयातान् ।
मधुकरनिकरानवेक्ष्य फुल्लप्रसवमिषाद् गिरिमल्लिका जहास ॥ २४ ॥

परिणतपल्लवराशिर्विकलः प्रसवैर्मधुव्रतापेतः ।
अभवदशोकः शोच्यः कदम्बसंक्रान्तभूरिसौभाग्यः ॥ २५ ॥

धूमस्तोमानुकारि प्रथममथ पुरो मारुतास्फालनेन
व्याप्तं व्योमान्तराले सुरपतिधनुषः शारितं मण्डलेन ।
धारानाराचपातैरवनिमभितुदद् वीक्ष्य जातं घनाना-
मुन्मादोन्मेषशोच्यप्रकृतिरिति किमप्यूचिवान् रामभद्रः ॥ २६ ॥

पीत्वा विषं जलनिधेः सहसोत्पतन्तः
कृत्वा निनादमथ दिक्षु परिभ्रमन्तः ।
आघूर्णमानतुमुलश्वसनावखिन्ना
मेघाः प्रसह्य पुनरेव तदुद्वमन्ति ॥ २७ ॥

दिशः सर्वाः खर्वा इव कवचिता मेघपटलैः
प्रलम्बैस्तैः कैश्चिद् गगनमपि सङ्कोचविरलम् ।
न दृश्यन्ते शैलाः समदशिखिनादैरनुमिताः
सिलिन्ध्रैरुद्भिन्नैः क्षितिरपि दृशोर्मे विषमदा ॥ २८ ॥

पवमानजवेन धावमानैः स्थगितज्योतिरितस्ततः प्रकीर्णैः ।
जलपानपिचण्डिलैः पयोधेश्चरतीवाम्बरमम्बुवाहजालैः ॥ २९ ॥

वेगोन्मूलितभीमसालपवनप्रेङ्खोलिताभ्रोदरा-
दुत्सृष्टा गिरिगण्डशैलभिदुरा धारा मुहुः पाथसाम् ।
वैदेहीविरहापकल्पमनसश्छिन्दन्ति गात्राणि मे
भिन्दन्ति प्रतिमर्म कामसुहृदः किं किं न कुर्वन्त्यमूः ॥ ३० ॥

चेतसापि विमुखेषु परवारिरसने
चातकाननपुटेषु फलितामुपतना ।

१. 'द्व', २. 'भ्रा', ३. 'जलं विपान': क. पाठः.

एहि मैथिलि ! विलोकय विलोलनयने !
कालिकापि कुरुते रतिमुपाश्रितजने ॥ ३१ ॥

अमृतद्रवपूर्णहेमकुम्भप्रतिमल्लेन मुहुः स्तनद्वयेन ।
मदिराक्षि ! ममोरसि प्ररूढं मनसस्तापमिहार्हसि प्रमार्ष्टुम् ॥ ३२ ॥

भवतु रुदितमुच्चैरूर्ध्वबाहुः करिष्ये
पदकमलजुषं मामत्यजज्जानकीति ।
इति मयि विदधाने चण्डि ! सौजन्यशून्या
धिगिति जगति वाचस्त्वत्कृतेऽप्युद्भवेयुः ॥ ३३ ॥

शतमखचापमुद्रितनलाङ्कणसान्द्रघृत-
प्रमदमयूरनर्तनमनोज्ञनितम्बभुवः ।
इह भवतीं विना निवसतः स्थिरशोकजडे
मम दधते रुजं हृदि नितान्तममी गिरयः ॥ ३४ ॥

इति विलपति प्रभौ दीनदीनाक्षरं
जनकतनयां विना वर्तमाने वने ।
निशिचरकुलक्षयं कर्तुकामो हत-
श्चिरमजानि लक्ष्मणश्चिन्तयानन्तया ॥ ३५ ॥

दुर्वारदुःखपरिवर्तितधैर्यमार्यं
पङ्कावगाढमिव गन्धगजं निरीक्ष्य ।
ये सद्गुणाः पुरुषभूषणतां गतास्तान्
मोघानमंस्त मदनस्य सति प्रतापे ॥ ३६ ॥

तमपारशोकहतबोधवैभवं
घनरुद्धतेजसमिवोष्णरोचिषम् ।
प्रकृतिं निनीषुरनुनीतिलम्पटः
स शुचं नियम्य गिरमित्थमूचिवान् ॥ ३७ ॥

आर्य ! प्रसीद शमयाधिमुपेहि धैर्यं
सीदन्ति नापदि हि भव्यधियः कदापि ।

युष्मद्विधेषु परिमूर्छति चेत् प्रमोहः
कं वा जनः शरणमृच्छतु तुच्छबोधः ॥ ३८ ॥

दृष्टापदाने द्विषि जागरूके
मायाविनीत्थं प्रतिबद्धवैरे ।
विभो ! न वेद्मयस्य पराभवस्य
प्रतिक्रियेदं परिदेवितं किम् ॥ ३९ ॥

मूकत्वे हृदयं स्थितिं न लभते वाचालता चेन्न सा
शोभायै तव शासितुः प्रमुखतः प्रायः परं कल्पते ।
अस्मिन् नाम दशान्तरे परिणते किं ब्रूमहे कुर्महे
किं वा कस्य पुरः प्रलापसलिलैः प्रक्षालयामः शुचम् ॥ ४० ॥

राज्याद् भ्रंशः पितुरुपरमो मातृभिर्विप्रवासो
वन्यैर्वृत्तिः शयनमवनौ दण्डकेषु प्रचारः ।
घोरैर्वैरं निशिचरकुलैः किञ्च दारापहारः
किं किं नाम व्यसनमभवन्न त्वयि प्राज्यवृत्ते ॥ ४१ ॥

यद्वा तोषित एव कौशिकमुनिर्निक्तश्वरी बाधिता
शार्वे चापमभाजि भार्गवमदो दूरात् समुत्सारितः ।
[1]सत्येऽवस्थितमाश्रितं मुनिवनं युद्धे खरो विद्रुतो
बाली चास्तमितस्त्वया रघुपते ! नासाधि किं वा यशः ॥

अलं वाग्भिराभिः कुरु प्रार्थितं मे
महावीर ! वीरश्रियः पूरय त्वम् ।
शराग्रावकृत्तैर्द्विषामुत्तमाङ्गै-
र्मनस्याहितां कन्दुकोत्क्षेपलीलाम् ॥ ४३ ॥

इति सौमित्रिवचोभिः शमिताधि त्रिजगदाधिशमनपरम् ।
सीतालोचननालीनिश्चूपितममृतमध्युवास गिरिम् ॥ ४४ ॥

इति रघुवीरचरिते नवमः सर्गः ॥

---

१. 'त्ये च स्थि' २. 'बाह्यय:.' क. पाठः.

## अथ दशमः सर्गः ।

ततः परिष्कृतं रामं शक्तिसिद्धिगुणोदयैः ।
पद्मालिङ्गा रिपूञ्जेतुं शारदी श्रीरचोदयत् ॥ १ ॥

आलक्ष्याभ्युद्यतं वीरं महत्युत्साहकर्मणि ।
नलिनान्यलिगर्भाणि विकासं प्रतिपेदिरे ॥ २ ॥

मुक्ताशेषजला मेघा निभृता लघुतां गताः ।
व्ययागमावनालोच्य स्थूललक्षा इवाभवन् ॥ ३ ॥

दृप्ता यत्सम्पदा पूर्वं ये रसान्तरनिःस्पृहाः ।
चातकास्ते घनान् रिक्तान् नाभ्यनन्दन् दृशापि तान् ॥ ४ ॥

विक्षेपमुखरैर्यन्त्रैरुत्त्रासितशुकोत्कराः ।
केदारोपान्तमासेदुर्गायन्त्यः शालिगोपिकाः ॥ ५ ॥

उदयेन प्रसन्नानि मुनेः सागरपायिनः ।
शूराणां च नदीनां च मनांसि च पयांसि च ॥ ६ ॥

परहस्तिमदामोदभ्रान्तिभाजो मदोत्कटाः ।
सौरभं सप्तपर्णानामसहन्त न दन्तिनः ॥ ७ ॥

पिबतां[1] यौगपद्येन मकरन्दं नवोद्भवम् ।
अभवत् पुण्डरीकेषु भ्रमराणां महोत्सवः ॥ ८ ॥

अमुचद् यां न वर्षासु मेघच्छन्नासु चन्द्रमाः ।
तया चन्द्रिकया पूरीचकार कुमुदोदरम् ॥ ९ ॥

स्फुटमीनप्रचाराणि सरितां वारि भेजिरे ।
स्पष्टसैकतजातानि पुंसामर्थोरुदन्नताम् ॥ १० ॥

वलाहकानां शकलैर्निश्शेषक्षरिताम्भसाम् ।
सङ्कीर्णं सर्वतो व्योम चित्राक्रान्तमिवाभवत् ॥ ११ ॥

प्रतीक्षमाणा निष्पङ्कां वेलामाहृतशालिकाम् ।
कृतयोग्याग्रहा योधा निन्युः शस्त्राणि सज्जताम् ॥ १२ ॥

---

१ 'रसतां' क. पाठः.

एवमभ्युद्यतं कालं निरीक्ष्य सफलोद्यमः ।
रामः शत्रुकुलोच्छेत्ता वाचं सौमित्रये ददौ ॥ १३ ॥

शरद् यौवनमारूढा पश्य ! वीरश्रियः सखी ।
निरुद्यमा वयं तावत् कृत्यवन्तो व्यवस्थिताः ॥ १४ ॥

कबन्धशबरीवाक्यैर्विश्वस्ते मयि मानद ! ।
उपकारिणि सुग्रीवो मन्ये नाऽऽस्यमिच्छति ॥ १५ ॥

छलेन यत्कृते तस्मिन् वालिन्यनपराधिनि ।
पातितो निर्विमर्शेन मया रामेण सायकः ॥ १६ ॥

प्रागनिर्विष्टविस्रम्भे मैत्रीमभ्यर्थयत्यपि ।
पुमानतिप्रसज्येत सहसा नेति नः श्रुतम् ॥ १७ ॥

विशुद्धया विशुद्धस्य वाचोयुक्त्या हनूमतः ।
विलोभितस्य मे बुद्धिरतिचारमुपाश्रिता ॥ १८ ॥

साह्यार्थं मित्रलाभाय मतिर्नाति[1]व्यपेक्षणी ।
चापे च त्वयि चायत्तं जानीहि विजयं मम ॥ १९ ॥

अनेनोपकृतिर्मे स्यादित्यनार्द्राशये जने ।
मा भूदापन्निमग्नोऽपि नवनीतमना बुधः ॥ २० ॥

हृतदारो दशास्येन सहायार्थी प्लवङ्गमम् ।
लिप्सुः प्रतीक्षते रामो मा भूदिति जनश्रुतिः ॥ २१ ॥

तथापि प्राप्य किष्किन्धां राजद्वारमुपाश्रितः ।
मामिहावस्थितं तस्मै कपिराजे निवेदय ॥ २२ ॥

स तस्य शासनं कृत्वा हृदि संरम्भनिर्भरे ।
उद्दिष्टं स्थानमासाद्य जगाद प्लवगेश्वरम् ॥ २३ ॥

राजन् ! कपीनां नेतासि त्वामहं द्रष्टुमागतः ।
अवधानप्रदानेन क्रियतां मय्यनुग्रहः ॥ २४ ॥

---

1. 'पि' क. पाठः.

आसीद् दशरथो नाम राजा सत्यप्रतिश्रवः।
तस्य राम इति ख्यातः पुत्रोऽभूद् गुणवत्तमः ॥ २५ ॥

मात्रा सपत्न्या कैकेय्या निरस्तः स वनं गतः।
तेनेदं दण्डकं सर्वं कृतं विध्वस्तराक्षसम् ॥ २६ ॥

तस्य गोदावरीतीरे वसतः खरघातिनः।
रावणेन हृता भार्या मैथिली पतिदेवता ॥ २७ ॥

तामन्वेष्टुं परिक्रामन्नद्रेरद्रिं वनाद् वनम्।
तुम्बुरुं नाम गन्धर्वं मुनिशापादमोचयत् ॥ २८ ॥

भृङ्गैरम्बरमाचुम्बन्नार्तानां शरणप्रदः।
इतो नातितरां दूरे माल्यवान् नाम पर्वतः ॥ २९ ॥

उपत्यकायां तस्यास्ति पम्पा नाम शिवोदका।
कापि पुष्करिणी भङ्गैरास्फालिततटस्थली ॥ ३० ॥

तत्राश्रमपदं तस्यास्तीरे यत्रावसत् पुरा।
मतङ्गस्तस्य शिष्याश्च शबरी च चिरन्तनी ॥ ३१ ॥

कृच्छ्रेण वसता तत्र तेन मासचतुष्टयी।
अत्यवाह्यत धारालैर्घनैर्दुर्दर्शदिङ्मुखा ॥ ३२ ॥

अपि दृष्टः सकृत् क्वापि स शरण्यस्त्वया विभो !।
जटिलश्चीरवसनः प्रियाविरहकर्शितः ॥ ३३ ॥

राजन् ! प्राप्तः शरत्कालः पन्थानश्चापकर्दमाः।
बभूवुः सरितो नाव्याः सुतराः सुतरामिह ॥ ३४ ॥

राजन् कर्माणि सन्त्येव सर्वेषामपि देहिनाम्।
आत्माभ्युदयबन्धीनि महदल्पव्यवस्थया ॥ ३५ ॥

मृषा न नीयते तेन कालः स्तोकोऽपि जाग्रता।
आत्मनोऽभ्युचिते कृत्ये वशिना वानरेश्वर ! ॥ ३६ ॥

तस्य भ्रातास्मि नाम्नाहं लक्ष्मणस्तत्प्रियङ्करः।
प्रसादभाजनं चास्मि परमारभ्य जन्मनः ॥ ३७ ॥

यस्याभिषेके प्रक्रान्ते प्रारब्धं मङ्गलेष्वथ।
तस्मिन्नेव वनं प्राप्ते वन्या वृत्तिर्मयादृता॥ ३८॥

अद्य युद्धाय सन्नद्धं तमन्वग् यामि सायुधः।
अनुवृत्तिर्गुरूणां हि लोकद्वयफलप्रदा॥ ३९॥

त्वया चिरोषितं स्थानं कृपया नः समर्पितम्।
तत्र निर्व्याकुला राजन्नियन्तं कालमूषिम॥ ४०॥

साम्प्रतं गन्तुमिच्छामस्ततः कार्यान्तरोद्यताः।
न गन्तव्यं ह्यनामन्त्र्य परं परगृहोषितैः॥ ४१॥

शिरसा वहतस्तस्य पदपद्मरजःकणान्।
करेण चेदं कोदण्डं दुष्करं मे न किञ्चन॥ ४२॥

शृण्वन्नित्थं वचस्तस्य रूक्षं माधुर्यदर्शितम्।
प्रसीद मयि नाथेति पादौ जग्राह तापनिः॥ ४३॥

स तमेव पुरस्कृत्य भयेन व्यथितेन्द्रियः।
रामस्योपान्तमाश्रित्य प्रणनाम प्रसादयन्॥ ४४॥

मूर्ध्नि बद्धाञ्जलेस्तस्य परिम्लानमुखश्रियः।
सर्वाङ्गीणाः स्रवन्ति स्म रोमभ्यः स्वेदबिन्दवः॥ ४५॥

तथास्थितं स सुग्रीवं दृशा सम्भाव्य सौम्यया।
यतस्व सीतामन्वेष्टुमिति धीरमवोचत॥ ४६॥

वचसीति श्रुते तस्मिन् पीयूष इव दुर्लभे।
पुनर्जातमिवात्मानं मेने स हरिपुङ्गवः॥ ४७॥

तेनोपकृतमात्मानमनृणं कर्तुमुद्यतः।
तत्प्रसादैकशरणः प्रयत्नाय प्रचक्रमे॥ ४८॥

ततो बालातपाताम्रमुखन्यक्कृतदाडिमा।
मधुपिङ्गलनेत्रार्चिर्नीराजितनभोङ्गणा॥ ४९॥

शुभ्रदंष्ट्राङ्कुरज्योतिस्स्मेरसृक्पुटोत्कटा।
विमलोरस्स्थलाक्षिप्तशरदम्बुदडम्बरा॥ ५०॥

---

१. 'परा लोकद्वयप्र', २. 'ड्डा' क. पाठः.

वेगाकृष्टमहासालपातक्षुण्णाद्रिमेखला ।
हेलाच्छोटितलाङ्गूलकृतसौदामिनीजया ॥ ५१ ॥

उद्यत्किलिकिलारावशब्दायितदिगन्तरा ।
सचराचरभूगोलमर्दनक्षमविक्रमा ॥ ५२ ॥

चलद्भुजपदन्यासकम्पितक्षितिमण्डला ।
भीमहिक्काचयत्रस्तवैमानिकमरुद्गणा ॥ ५३ ॥

जम्बूपरिणतिश्यावनखनिर्दारिताहिता ।
उद्धतवररजोराजीजम्बालितसुरापगा ॥ ५४ ॥

रुद्धमारुतसञ्चारा दुर्धरा हरिवाहिनी ।
बद्धाञ्जलिपुटा मूर्ध्नि पर्युपास्त रघूद्वहम् ॥ ५५ ॥

अनौर्वानलनिर्दाह्यमपेयं कुम्भयोनिना ।
कपिसैन्यं तदद्राक्षीदपूर्वमिव सागरम् ॥ ५६ ॥

मारुतिं जाम्बवन्तं च वाचा सम्भाव्य वाक्पटुः ।
वीक्ष्य नीलाङ्गदौ देवः सुग्रीवमिदमूचिवान् ॥ ५७ ॥

विभज्य वानरीं सेनां दिक्षु सर्वासु चारय ।
क्व वा सीता कथं वेति यथावदवधार्यताम् ॥ ५८ ॥

आज्ञां स्रजमिवादाय मूर्ध्ना तस्य कृतादरः ।
सम्भूय यूथपैर्धीमान् गिरमित्युदमीलयत् ॥ ५९ ॥

निर्भरा भाग्यसम्पत्तिस्तावदस्मासु खेलति ।
उपकर्तरि लोकानां वयं यदुपकुर्महे ॥ ६० ॥

इयं नश्चपला जातिः कस्याप्यनुपकारिणी ।
अनया स्वामिनः कृत्यं घटेत यदि के वयम् ॥ ६१ ॥

संविभक्ता चतुर्धासौ सेना व्रजतु मा चिरम् ।
दिक्चतुष्टयमुद्दिश्य यावदर्कत्विषां गतिः ॥ ६२ ॥

द्वीपान् ससागरान् सप्त तद्धर्मानप्यशेषतः ।
इयन्तश्चेदृशश्चेति याथातथ्येन वेद्म्यहम् ॥ ६३ ॥

विचित्य देवीं सर्वत्र विदित्वा तद्दशाः पुनः ।
मासमात्रेण कालेन प्रत्यापत्तिर्विधीयताम् ॥ ६४ ॥
तस्याज्ञामिति संगृह्य यास्यत्सु कपिषु प्रभुः ।
आहूय मारुतिं धीमान् वाचमित्थमुदाहरत ॥ ६५ ॥
वानरेष्वेषु सर्वेषु स्थिरसाहसवृत्तिषु ।
विस्रम्भग्रन्थिरस्त्येव स तु त्वयि विशेषगः ॥ ६६ ॥
त्वया सङ्गच्छमानेन प्रीणिते मे यदा दृशौ ।
तदाप्रभृति वैदेही प्रत्यापन्नेति मे मतिः ॥ ६७ ॥
एते न न करिष्यन्ति मत्कृते साहसान्यपि ।
स्थेयसा त्वत्प्रयत्नेन सिद्धिः सम्पत्स्यते ध्रुवम् ॥ ६८ ॥
इमानि कुसुमानीव व्यञ्जयन्ति फलोद्गमम् ।
त्रिविधानि निमित्तानि प्रसीदति च मे मनः ॥ ६९ ॥
नचिरान्नागनासोरूर्नूनं प्रेक्षिष्यते त्वया ।
दुर्ज्ञेयस्त्वत्प्रयासस्य महिमा हि तथाविधः ॥ ७० ॥
इदं मे जीवितं मूर्तमिव रत्नाङ्गुलीयकम् ।
ऋषिविश्राणितं तस्यै प्रत्ययाय प्रदीयताम् ॥ ७१ ॥
इति तस्मिन् गिरं कृत्वा प्रत्यामुच्याङ्गुलीदलात् ।
स्वमञ्जलिपुटं नीत्वा सबाष्पं निरवर्णयत् ॥ ७२ ॥
निजगाद च भूयस्तन्निःश्वासज्वारिताधरः ।
दर्शनात् प्रभृति स्वस्मिंस्तस्या वृत्तिमनुस्मरन् ॥ ७३ ॥
चिरार्जितानां तपसां विवर्तस्त्वं तपोधनैः ।
त्वया मां दैवसम्पत्तिः स्वयमेव वरिष्यते ॥ ७४ ॥
आर्तेष्वभ्यवपत्तारस्तापसा हि दयालवः ।
तद्योगात् तव ताच्छील्यं निश्चिनोति मतिर्मम ॥ ७५ ॥
उक्तमज्ञातपूर्वेण यदनेन हनूमता ।
तस्यास्तत्प्रत्ययं नेतुमेवमेवेति साधय ॥ ७६ ॥

१. 'नी', २. 'सन्नेन' क. पाठः.

किञ्च ब्रवीमि पूर्वं नौ साकेतपुरवासिनोः ।
पुष्पारामेषु या केली विस्मर्तव्या न सा तव ॥ ७७ ॥
इति विज्ञाप्य मद्वाचा तामुच्छ्वासय सुव्रताम् ।
स्त्रीणां हि प्रियसन्दिष्टं वियुक्तानां रसायनम् ॥ ७८ ॥
इदं च वद सुव्यक्तं शपामि पदयोः पितुः ।
सद्वीपान् सागरांस्तीर्त्वाप्यानेष्ये भवतीमिति ॥ ७९ ॥
इत्युक्त्वेतरदुष्प्रापरुचिप्रसरपेशलम् ।
हृदयं मूर्तमिव तन्निदधे तत्करे विभुः ॥ ८० ॥
रक्षौषधमिवादाय तत्पाथेयमिवात्मनः ।
प्रयास्यन् प्रान्तरं भेजे प्रमर्दं मरुतः सुतः ॥ ८१ ॥
प्राणिता तेन सा सेना वानराणां महौजसाम् ।
उद्दिश्य दक्षिणामाशां प्रतस्थे भर्तृशासनात् ॥ ८२ ॥
उदन्यन्तो विचिन्वन्तः शैलसानुषु जानकीम् ।
कण्डुना मुनिना शप्तां प्रापुः श्रान्ता मरुस्थलीम् ॥ ८३ ॥
यत्र न प्राणिसञ्चारो नाम्भांसि न महीरुहाः ।
भौमोष्णप्रसराद् यत्र मृगतृष्णा निशास्वपि ॥ ८४ ॥
ते जाङ्गलपदभ्रान्तिद्विगुणीकृतचापलाः ।
बिलं प्रविविशुर्भीमं दर्शितेन पथा द्विजैः ॥ ८५ ॥
हतासुरास्तमस्यन्धे चरन्तः शमितक्षुधः ।
स्वयंप्रभाप्रसादेन निरक्रामन् गुहोदरात् ॥ ८६ ॥
ततः सम्पातिसम्पातं कृत्वोत्क्रान्तं जटायुषम् ।
विज्ञाप्य तन्मुखात् सीतां लङ्कां नीताममंसत ॥ ८७ ॥
विन्ध्यपादानवन्ध्येहा विलङ्घ्यालङ्घ्यतेजसः ।
अध्वानं पृथुभिर्ध्वानैस्तेरुस्ते रुद्धदिङ्मुखाः ॥ ८८ ॥
समयातिक्रमाद् भर्तुः काकुत्स्थाप्यायितात्मनः ।
अवक्षेपं ययुस्तेषां हृदयानि निरत्ययम् ॥ ८९ ॥

---

१. 'मु' क. पाठः.

वाचा जाम्बवतः स्थैर्यं नीता भूयोऽपि ते गिरिम्।
मलयं पृष्ठतः कृत्वा पारं प्रापुर्महोदधेः ॥ ९० ॥
तिमिङ्गिलैर्महाभोगैस्तिमिग्रसनलोलुपैः।
अन्तर्लीनैरिव द्वीपैराघूर्णितजलोदरम् ॥ ९१ ॥
श्रीविलासैरिवालोलैर्हस्तैरिव महोर्मिभिः।
आलिङ्गन्तं मुहुर्वेलामेलापाकेन वासिताम् ॥ ९२ ॥
पश्यन्ति स्म च निस्सीमकौतुकस्तिमितेक्षणाः।
तमपारमगाधाम्बुनिलीनासुरभूभृतम् ॥ ९३ ॥
ते तरङ्गानुसारेण प्लवमानास्तदाप्लुताः।
आलिह्य स्वानि गात्राणि क्षारार्द्राण्युच्चकम्पिरे ॥ ९४ ॥
वरस्त्रीदन्तचारूणि शुक्त्युद्गीर्णानि चापलात्।
मौक्तिकानि हनौ कृत्वा नीरसानि समत्यजन् ॥ ९५ ॥
अयस्सूचिनिशातेषु श्रान्ताः क्षारतृणेषु ते।
निषण्णमात्रास्तद्विद्धाः कृतचीत्कारमुत्प्लुताः ॥ ९६ ॥
तत्राङ्गदवचोभिन्नां चित्तवृत्तिं वनौकसाम्।
मारुतिः प्रकृतिं नीत्वा प्राक्षिपत् प्रस्तुतं प्रति ॥ ९७ ॥
सिन्धूल्लङ्घनसामर्थ्यामप्रगल्भतया पुनः।
कपिषु ध्यानमूकेषु जाम्बवानाह मारुतिम् ॥ ९८ ॥
प्राक् प्रभाते विजृम्भायां सिसृक्षोः परमेष्ठिनः।
जातोऽहं प्रथमं देहात् ततः स्वायम्भुवादयः ॥ ९९ ॥
ततः परस्ताज्जानामि विश्वसर्गक्रमं पितुः।
प्रलयान् कल्पभेदांश्च मनूनां च व्यवस्थितिम् ॥ १०० ॥
परोक्षकीर्तनैः किं स्यात् फलं कालात्ययादृते।
अस्मिन् काले श्रुतिप्राप्तं यत् तदेकमनाः शृणु ॥ १०१ ॥
अन्विच्छन्तं पुरा वेदान् प्रवृद्धे प्रलयाम्भसि।
क्रीडन्तं छन्दतो वेद्मि मीनाकारं जगत्प्रभुम् ॥ १०२ ॥

---

१. 'क्रम', २. 'र्हालिङ्ग्य', ३. 'न', ४. 'द्रुतम्' ख. पाठः.

ततः सुरासुरोदस्तमन्दरोद्धारहेतवे ।
बद्धकक्ष्यं महाकूर्ममन्वभूवं दृशानया ॥ १०३ ॥

हिरण्याक्षेण पर्यस्तां धरित्रीमुद्धरिष्यतः ।
मायामहावराहस्य महिमा निरवर्ण्यत ॥ १०४ ॥

नखनिर्भिन्नदैत्येन्द्रविकटोरस्स्थलोद्गतैः ।
रुधिरैराप्लुतो दृष्टो मया पुरुषकेसरी ॥ १०५ ॥

पदत्रयेण लोकांस्त्रीन् बलेर्हरति वामने ।
मया त्रिलोकीं भ्रमता दुन्दुभिः समहन्यत ॥ १०६ ॥

त्रिःसप्तकृत्वः पृथिवीं क्षिप्तक्षत्रां वितन्वतः ।
यद् वृत्तं जामदग्न्यस्य प्रत्युप्तं तद् दृशोर्मम ॥ १०७ ॥

पुराहमेकयोत्प्लुत्या विरिञ्चभवनं गतः ।
अभिवन्द्य तमद्राक्षमसङ्ख्यान् प्राक्तनान् मनून् ॥ १०८ ॥

कौशिकोद्भावितान् देवान् वैश्वानरपथाद् बहिः ।
अवस्थितांस्ततो गत्वा सद्यः पातालमाश्रितः ॥ १०९ ॥

इति वेगपरीक्षार्थमुत्प्लुतं यौवने सति ।
अतिक्रान्तेन किं तेन वर्षीयानस्मि निस्सहः ॥ ११० ॥

पुनरुक्तवलीव्यक्ति मुखं भ्रूपिहिते दृशौ ।
सवेपथूनि गात्राणि खिन्नानि धिगिमां दशाम् ॥ १११ ॥

मिषत्स्वस्मासु सर्वेषु त्वामहूय रघूद्वहः ।
अञ्जलौ कृतवान् धीमानभिज्ञानाङ्गुलीयकम् ॥ ११२ ॥

भर्तुर्देवस्य देव्याश्च सर्वेषां नो वनौकसाम् ।
दुर्वहः सकलो भारस्त्वय्येव विनिवेशितः ॥ ११३ ॥

सागरोल्लङ्घने शक्तिरस्त्येवैष्वङ्गदादिषु ।
किन्तु मायाविभिर्योद्धुं प्रत्यागन्तुं त्वमीशिषे ॥ ११४ ॥

---

१. 'स्वि' क. पाठः.

स्वस्त्यस्तु तात! ते विघ्ना मा भूवन् पथि यास्यतः ।
प्रत्यावृत्तं कृतार्थं त्वां पश्येयमनया दृशा ॥ ११५ ॥

बह्वपायेन मार्गेण तितीर्षोरम्भसां निधिम् ।
तव क्षेमाय भूयास्तामजेयौ रामलक्ष्मणौ ॥ ११६ ॥

अभिज्ञानप्रदानेन सीतायाः प्रत्ययं त्वयि ।
मनःप्रसादः स्वामिन्याः क्षिणोत्वध्वपरिश्रमम् ॥ ११७ ॥

इति शतधृतिसूनोः प्रस्तुतार्थानुकूलां
गिरमवहितचेताः शुश्रुवान् रामदूतः ।
उदधितरणकल्यां मूर्तिमङ्गीकरिष्यन्
समधित पितृतुल्य[1]श्चेतसि स्वं प्रभावम् ॥ ११८ ॥

इति रघुवीरचरिते दशमः सर्गः ।

---

## अथैकादशः सर्गः ।

तदनु पवनसूनुर्ऋक्षराजः शकलितमान्द्यमरज्जुभिर्वचोभिः ।
विकसितमहिमा दशास्यनीतां जनकसुतामुपचक्रमे विचेतुम् ॥ १ ॥

जनकदुहितृविप्रलम्भखिन्नं विभुमथ तामपि तद्वियार्तिभाजम् ।
उपकृतिनिरतं पतिं कपीनामपि स कृतार्थयितुं बभूव सज्जः ॥ २ ॥

गगनलिहि महेन्द्रशैलमूर्ध्नि व्यवसितचित्तमवस्थितस्य तस्य ।
वपुरलघु शरद्घनावदातं प्रसभमवर्धत सागरं तितीर्षोः ॥ ३ ॥

श्रियमभ[2]जत लब्धपाण्डुभावैः सितरुचि तस्य शिरः कचैरुदीर्णैः ।
शरदुपगमसारिताम्बुगर्भैर्हिमगिरिकूटमिवाम्बुदैर्विलग्नैः ॥ ४ ॥

तरुणतरणिबिम्बचारुकान्ति प्रकटितचन्द्रकलावदातदंष्ट्रम् ।
अशनिशकलदुर्निरीक्षदन्तं मुखमुदभासत तस्य पिङ्गनेत्रम् ॥ ५ ॥

अरुणरुचि मुखं विराजमानं ज्वलितरुचा मणिकुण्डलद्वयेन ।
गुरुभृगुसुतमध्यगस्य भानोरनतिचिराभ्युदितस्य धाम भेजे ॥ ६ ॥

---

१. 'ल्यं चे' क. पाठः. २. 'लभत' ख. पाठः.

रुचिमुदवहतामहीन्द्रभोगद्युतिपरिभूतिकृतौ भुजौ तदीयौ ।
अवनितलसमुन्नतिप्रगल्भौ विपुलतरानिव यन्त्रदारुसारौ ॥ ७ ॥
निचितरुचिररोमदर्शनीयं स्फटिकमणिस्फुटकान्ति तस्य वक्षः ।
विसृमरकिरणस्य शीतभानोः श्रियमपहस्तितलक्ष्मणो जहार ॥ ८ ॥
जवपवनविधूतशैलशृङ्गौ जगदवनक्षमतोरणायमानौ ।
पृथुजघनभरप्रसक्तखेदौ गगनमपूरयतां तदूरुकाण्डौ ॥ ९ ॥
रघुपतिदयितार्थमुत्पतिष्णोश्चरणसमर्पणशीर्णसानुकूटः ।
क्षितिभृदुदवमत् तदीयनादप्रतिरुतगर्भगुहामुखैर्मृगेन्द्रान् ॥ १० ॥
अमरवसतिपद्मनालदण्डः सरभसमस्य समुत्पपात बालः ।
बलिमखमथनोद्यतस्य विष्णोश्चरण इव त्रिदशारिधूमकेतुः ॥ ११ ॥
विहितशतधृतिस्तुतिर्नमस्यन् गिरिशमनुस्मृतराघवाङ्घ्रिपद्मः ।
पितरमथ समस्तदेवतानां गणमपदिश्य च वन्दनं चकार ॥ १२ ॥
परिचितमपि मेघभीमघोषं विपुलहिमाचलतुङ्गभीषणाङ्गम् ।
गगनपथविभागबद्धकक्ष्यं तमथ निरीक्ष्य वितत्रसुः प्लवङ्गाः ॥ १३ ॥
व्यवसितमिति तं विलोक्य सिद्धा जलनिधिनिस्तरणे कुतूहलेन ।
स्तिमितनयनचित्रितान्तरिक्षा गिरमिति तस्य कृते मिथो विवव्रुः ॥
गिरिदुहितरि शम्भुना निषिक्तं सकलदुरुद्वहमव्ययशक्ति तेजः ।
उदरगतमभूद् यदञ्जनायाः प्रभवममुष्य महात्मनस्तदाहुः ॥ १५ ॥
अयमजनि यदा तदा जिहीर्षुः परिणतदाडिमताम्रमर्कबिम्बम् ।
उदयगिरिगतं निरीक्ष्य वेगादुदपतदम्बरमामिषभ्रमेण ॥ १६ ॥
फलमिति मनसाभिमन्यमानः सुरपतिकुञ्जरमुत्पतन् जिघृक्षुः ।
हनुभुवि कुलिशेन तेन विद्धः क्षितिमभजत् प्रतिपन्नवान् प्रमोहम् ॥
सुतमकृशदशान्तराभिभूतं चलितधृतिः परिगृह्य मातरिश्वा ।
विधृतरभसमात्मनो महिम्ना जगदिदमस्तमितेहितं चकार ॥ १८ ॥
जगति जडतया दृढाभिभूते हरिहरपद्मभुवः पुरो विधाय ।
अमरपरिषदङ्कलग्नसूनुं पवनमुपेत्य जगद्धितं ययाचे ॥ १९ ॥

---

१. 'गा', २. 'भु' क. पाठः.

परममिति गिरं प्रयुज्य तेभ्यः पुनरवृणीत वरं शुभाय सूनोः ।
युधि विजयमदीर्णतां च शस्त्रैरनियतमायुरथात्मनो जयं च ॥ २० ॥

पुनरपि च विचिन्त्य पुत्रलोभात् स्थिरगुणधीरणिमादिकान् गुणांश्च ।
अलभत स च तेऽपि विश्वरक्षावितरणजागृवयस्तिरोबभूवुः ॥ २१ ॥

यदयममरराजहेतिकोटिक्षतहनुरप्यसुभिर्न वञ्चितोऽभूत् ।
सुरपरिपदमुष्य दत्तकीर्तिस्थिति हनुमानिति नाम तेन चक्रे ॥ २२ ॥

अयमहिमरुचे रथाग्रगामी समपठदेकदिनेन शब्दविद्याम् ।
स तु निजसुतमित्रतामसुष्माद् गुरुमहिमा गुरुदक्षिणां प्रपेदे ॥ २३ ॥

पितुरिव बलवेगयोरमुष्य स्थितिरमराधिपतेरिवोरु तेजः ।
कमलभुव इवोद्यमः समाधौ कपटवटोरिव कामरूपता च ॥ २४ ॥

प्रयतमनसि विश्वसन्नमुष्मिन् व्यसनशतापहृतोऽपि वर्तते यः ।
स हि सकलमनोरथैर्गृहीतस्तपनतनूज इव प्रयाति लक्ष्मीम् ॥ २५ ॥

अयमिह मनसाभिमन्यते चेत् स्वभुजबलेन समुद्धरेद् धरित्रीम् ।
क इव तुलयितुं भवेत् प्रयासः कतिपयरात्रिचराश्रयं त्रिकूटम् ॥

जय जय हनुमन्नुदग्रकीर्ते ! जय जय विश्वसनीयशीलसीमन् ! ।
जय जय जनकात्मजाग्रदर्शिन् ! जय जय राघवकामकामधेनो ! ॥

भवतु शिवमपांनिधिं तितीर्षोर्विषमफलान्यशुभानि मा स्म भूवन् ।
रजनिचरपतेर्यशःपताका व्रजतु पटच्चरतां तवेहितेन ॥ २८ ॥

जवजितजनकः प्रविश्य लङ्कामधरितदेवपुरीं विभूतिभूम्ना ।
अवहितमति सर्वतो विचित्य क्रमविधुरामधिगच्छ रामपत्नीम् ॥ २९ ॥

कपटहरिणवञ्चनात् परस्ताद् वनभुवि यानि विभोर्दशान्तराणि ।
कथय शरनिरस्तवालि तस्यै हरिपतिसख्यमुदग्रमुद्यमं च ॥ ३० ॥

वचनकुशल ! सूनृतैर्वचोभिः शिशिरय तां प्रियविप्रलम्भतप्ताम् ।
चिरमवनिमवग्रहोपरुद्धां सलिलभरैरिव सान्द्रवारिवाहः ॥ ३१ ॥

---

१. 'शिवाय', २. 'प' ख. पाठः. ३. 'साद:', ४. 'लोक्य क्र',
५. 'वि' क. पाठः.

इति खचरगणैरुदीर्यमाणां गिरमुपबृंहिततेजसं नि(य?श)म्य ।
मतिमति गुरुणा कृतः स्वभक्ते सुचिरपदेश इवैयते स्म वीरः ॥ ३२ ॥

विवृतमुखबिलोत्तरङ्गजिह्वं लघु दशकन्धरयोजनायतं सः ।
वपुरभृत च तत्रिभागपीनं विभजद्दिवाखिलमम्बरावकाशम् ॥ ३३ ॥

दृढचरणनिपीडनावरुग्णक्षितिधरकूटमपास्तशत्रुकूटः ।
उदपतदप(त?द)र्पयन् महिम्ना गुरुमपि चारणवर्गदत्तमार्गः ॥ ३४ ॥

जवपवनसमुद्धृताः समूलं विवशविलोलितपल्लवाग्रशाखाः ।
चपलमिव विभुं घनानुरोधाः क्षणमनुजग्मुरनोकहा महान्तः ॥ ३५ ॥

विरचितनुति नन्दनोपनीतैः सुरभितमैः कुसुमैरवाकिरन्त्यः ।
पपुरतितृषितैरिवाक्षिपत्रैर्मणिचषकैरिव दिव्ययोषितस्तम् ॥ ३६ ॥

त्वरितगतिरवेक्षणेन तासामुपचरितानि कृतादरः प्रगृह्य ।
प्रकृतमनुससार भीमदेहप्रसभनिवारितभानुरश्मिजालः ॥ ३७ ॥

प्रकटितजलवेणि दक्षिणस्यां दिशि रभसोन्नतभीषणैकवीचिः ।
अभजत जलधिस्तदीयवेगप्रभवमरुद्विधुतो विलस्य कक्ष्याम् ॥ ३८ ॥

पयसि हरिभयेन ये निलीनाः क्षितिधरदैत्यगणा निरस्तशङ्कम् ।
झटिति ददृशिरे च तद्व्यपायप्रकटबिलोदरगोचरास्तदानीम् ॥ ३९ ॥

प्रलय इव समुद्धतैस्तरङ्गैः कृतबडवानलघोणरन्ध्ररोधः ।
चकितचकितनक्रचक्रवालः समधिकमुच्छ्वसिति स्म सिन्धुराजः ॥

गरुडभयनिलीननागकन्यापृथुकुचकुम्भकृतानुभूतभूतिः ।
पवनसुतहिताय वारिराशेर्हिमगिरिसूनुरथोन्ममज्ज शैलः ॥ ४१ ॥

दधदथरितसूर्यसोमवह्निद्युतिविभवान् महसा महत्तमेन ।
शिखरकटकसानुमेखलाभिर्मणिनिवहानपि दुर्लभान् वलारेः ॥ ४२ ॥

कनकमणिविशिष्टधातुचित्रः अतिदिशमुच्छ्रितभीमशृङ्गबाहुः ।
क्षितिभृदनिभृतोद्यमः समुद्रात् प्रथमवराह इवोत्पतन् बभासे ॥ ४३ ॥

उपनतमथ सागरोपदेशात् स निजपरिश्रमहापनाय भूयः ।
सुनिपुणमनुमान्य रामकार्यत्वरितगतिर्दिवमुत्पपात वीरः ॥ ४४ ॥

---

१. 'वतंसम्।' क. पाठः

गतवति गुहमातुले महीध्रे तदनुगृहीतसमर्हणप्रतीते।
सरणिमरुणदुद्गतस्य तस्य स्फुटमहिमा सुरसा भुजङ्गमाता ॥ ४५ ॥

स्थगितपवनवर्त्मदिग्विभागा कवलयितुं तमवर्धत प्रकामम्।
स खलु पितृसमस्तदीयरूपद्विगुणितभीमतनुर्बभूव सद्यः ॥ ४६ ॥

निरतिशयमवेक्ष्य तस्य तेजः स्तवकितधीर्महता कुतूहलेन।
व्रज तव शिवमस्तु साधयामीत्यलमनुगृह्य तिरोबभूव देवी ॥ ४७ ॥

अतुलबलजवौजसं प्रवृत्तं नभसि तथा जितपुष्पकानुभावम्।
ग्रसितुमवहिताशयः समुद्रात् सरभसमुत्पतति स्म कोऽपि सत्त्वः ॥

सरणिमिव रसातलं प्रवेष्टुं वदनगुहामनिलोपमः प्रविश्य।
तदुदरमवदारयन् नखाग्रैर्निरगमदभ्रचयादिवोष्णरश्मिः ॥ ४९ ॥

वीरश्छायाग्राहिणीं यातुधानीमेवं कृत्वा कृत्यवान् भर्तृहेतोः।
हर्षस्मेरैर्नाकिभिः स्तूयमानो भूयोऽप्यासीदम्बरे भीमरूपः ॥ ५० ॥

त्रिभिः शृङ्गैस्तुङ्गैर्गगनमभिरुन्धन्तमभित-
स्तरङ्गैरम्भोधेरहिनिवहभीमैरभिहतम्।
मणिस्तोमज्योतिष्प्रसरहसितार्केन्दुदहनं
त्रिकूटं शैलेन्द्रं तनुतमतनुर्प्रौढिरगमत् ॥ ५१ ॥

इति रघुवीरचरिते एकादशः सर्गः।

---

## अथ द्वादशः सर्गः।

स लम्बमुच्चैरतिलङ्घ्य शृङ्गं विलम्बितस्वर्णगिरिप्रभावम्।
अवेलसम्पाजितनाकलोकं सुवेलमापद्यत यत्र लङ्का ॥ १ ॥

स्फुटप्रकाशस्फटिकाश्मराजीनिवेशकूलप्रतिबिम्बितौघाः।
बृहद्दृषद्घट्टनभग्नभङ्गास्त्रिमार्गगा यत्र वहन्ति नद्यः ॥ २ ॥

प्रयाणवेगक्षुभिताम्बुगर्भेभ्याक्षिप्तशैलोरगदानवेभ्यः।
तिमिङ्गिलेभ्यः कवलोन्मुखेभ्यस्त्रस्तांस्तिमीन् रक्षति यो गुहाभिः ॥

---

१. 'व', २. 'हसनं' क. पाठः.

पुरन्दराद्यैः स्मृतचन्द्रहासैर्हृदापि नागम्यत या पुरस्तात् ।
वनौकसा राघवदूत्यभाजा ततः समावेशि दृशा पुरी सा ॥ ४ ॥

यस्यां मणिस्तोमरुचिप्रहर्षादुत्सारिते सन्तमसे विदूरम् ।
सरोजिनीपद्मविकासमात्रे परं भवत्यंशुमतः प्रयासः ॥ ५ ॥

भयादपीतः पितृदे[2]वमर्त्यैर्दशाननोत्थात् परिपूर्णमूर्तिः ।
यत्सौधचन्द्रोपलसंस्रवार्थं जागर्ति नित्येन तुषारभानुः ॥ ६ ॥

हविः किमश्नासि मखेष्वपास्तं त्रयीजनैः सम्प्रति मन्त्रपूतम् ।
रक्षांसि मांसानि पचन्ति यस्यां निर्भर्त्सयन्तीत्यसकृत् कृशानुम् ॥

तेजस्विना काव्यगुरुप्रयुक्ताः सन्धाय सम्भूय च दैत्यदेवाः ।
गुप्तां दशग्रीवभुजाबलेन प्रबाधितुं यां मनसाप्यकल्पाः ॥ ८ ॥

वर्षागमं कौतुककेतकानां प्रदेशमालोक्य मरुत्तनूजः ।
यत् तस्य वीर्यं रघुराजसूनोर्न तेन निर्वाहममंस्त कृत्यम् ॥ ९ ॥

स कामरूपः सरितः ससत्त्वाः शिलाविभङ्गैर्विषमाः स्थलीश्च ।
वनानि रम्याणि च भीमयन्त्राश्चकार पश्चात् परिखाश्च भूयः ॥ १० ॥

स जामदग्न्यप्रहितोग्रहेतिनिर्दारितं क्रौञ्चमिवाद्रिवर्यम् ।
अपावृतद्वारमुदीच्यमुच्चैर्हिरण्मयं गोपुरमाससाद ॥ ११ ॥

ददर्श चानारतमाचरन्तं गतागतं वेत्रभृतां नियोगात् ।
कृतावधानं क्षणदाचराणां महौजसामप्रतिमं समाजम् ॥ १२ ॥

तं सुप्रसन्नेन्दुमुखी मनोज्ञैर्वयोरुतैः स्वागतमुद्गिरन्ती ।
विकीर्य ताराकुसुमानि दूरादभ्यागतं प्रत्युदियाय सन्ध्या ॥ १३ ॥

द्वारप्रवेशं परिहृत्य धीमानुत्सार्य लङ्काश्रियमुन्नतेहः ।
उत्तुङ्गमुल्लङ्घ्य सुवर्णसालं तामभ्युपेतस्तनुतां विविश्वान् ॥ १४ ॥

स वीक्षमाणो विशिखाः समृद्धा महान्ति [3]सद्मानि च राक्षसानाम् ।
सुरद्रुमान् कामदुघांश्च तस्यां समन्ततः पर्यटति स्म भूयः ॥ १५ ॥

---

१. 'स्मि', २. 'वि' क पाठः. ३. 'वेश्मानि' ख. पाठः.

स कुम्भकर्णस्य विभीषणस्य महोदरस्येन्द्रजितः समूनोः।
तथेतरेषामपि वेश्मजातान्यालोकयल्लोकहितश्चचार ॥ १६ ॥
यद्वैभवं विश्वसृजापि साक्षात् स्मर्तुं न शक्यं कुत एव वक्तुम्।
तदद्भुतं राक्षसराजधाम प्रपद्य देव्याः पदमन्वियेष ॥ १७॥
स देवदैतेयमनुष्यवर्गाद् बन्दीकृता यौवनरूपधन्याः।
सुरक्षिताः कञ्चुकिभिर्महेला विलोकयामास कृतावधानः ॥ १८ ॥
उद्यानवाटीषु सरस्तटेषु रथ्यासु सर्वासु च सापणासु।
शुद्धान्तकक्ष्यासु च मार्गमाणो दृशा न लेभे रघुराजपत्नीम् ॥ १९ ॥
अवस्थितां तत्र सुपार्श्ववाचा विजज्ञिवांस्तामपि नाभिपश्यन्।
स तर्कयामास वितर्कशौण्डः स्वया धिया यत्ननिरोधखिन्नः ॥ २० ॥
इतो वृथोल्लङ्घितवारिराशिः प्रतिप्रयातो विधृताङ्गुलीयः।
स्मेराणि वक्त्राण्यभितः स्थितानां कथं कपीनामवलोकयेयम् ॥ २१ ॥
दृष्टा न देवी विचितैव सर्वा लङ्का निगूढेन मया निशायाम्।
इति श्रुते मद्वचने न जाने किं संस्यते दाशरथिर्निराशः ॥ २२ ॥
सामान्यवृत्तिं परिलङ्घ्य पुंसां सम्भावना भर्तृकृता हि शल्यम्।
गाढं निमग्नं हृदये कृतज्ञस्तदुद्धरिष्यन् लभते न निद्राम् ॥ २३ ॥
दुरुद्वहैः कर्मभिरन्तदूष्यैः प्रायेण नेतुः प्रमदं विधास्यन्।
दिवानिशं जागृविरप्रमत्तः कृच्छ्रेण भृत्यो नयति स्वमायुः ॥ २४ ॥
सेवाभृतां भावितया गुणैर्वा प्रसादभूमिर्यदि कोऽपि भर्तुः।
विशेषतः कर्मसु तस्य दोषानारोप्य चान्ये परिभावयन्ति ॥ २५ ॥
फलन्ति चेत् स्वामिगुणाः समस्ताः क्रिया विमूढा यदि भृत्यदोषः।
निरन्तरक्लेशनिदानभूतां धिगीदृशीं किङ्करतामनाथाम् ॥ २६ ॥
आज्ञाविधायी हितमाचरन् यः प्रायः स नैव प्रियकृन्नृपाणाम्।
कुर्वन् प्रियं शोभनमा समाप्तेर्यद्यस्ति कश्चित् तमहं नमामि ॥ २७ ॥
आलोकमात्रे सहसोपकर्तुस्तस्याङ्कसंकेन शरेण कामम्।
अनभ्युपेतस्य विभोश्चिकीर्षा कथं कपीनामधिपे भवित्री ॥ २८ ॥

---

१. 'भजत' ख. पाठः. २. 'णः समन्तात् किं' क. पाठः. ३. 'येण नै' ख. पाठः.

अनुस्मरन् बालिकृते विरोधं सुग्रीवहेतोः प्रभुणा प्रयुक्तम् ।
मत्साहसेनेति निरत्ययाधिर्ममाङ्गदः सम्प्रति नेक्षणीयः ॥ २९ ॥

महौजसा कर्मसु तेषु तेषु तातेन यज्जाम्बवतानुशिष्टम् ।
जडत्वमग्रे मयि तावदित्थं सर्वं तदासीत् फलकालमोघम् ॥ ३० ॥

न स्वामिनः कृत्यमसाधि भर्तुर्नानृण्यमापद्यत साहसं तु ।
मया कृतं नाम न किञ्चिदेतत् सप्ताम्बुधीँल्लँङ्घयतां कपीनाम् ॥ ३१ ॥

उपांशु यत्किञ्चिदिवोपदिश्य विश्वासयन् यो नयति स्वमर्थम् ।
स्वच्छन्दतः पौरुषशक्तिहीनः प्रत्यक्षचोरं पिशुनं तमाहुः ॥ ३२ ॥

मया परं माल्यवतोऽवतीर्य विश्वास्य सत्यैकधनं विभुं तम् ।
स्वार्थं च तस्मादधिगम्य तस्मिन् प्रभ्रंशितार्थेन खलेन जातम् ॥ ३३ ॥

त्यक्ष्याम्यसूंश्चेदयशःपदं तद् ध्रुवं तदन्ये कपयोऽपि कुर्युः ।
धक्ष्यामि पौलस्त्यभुजाभिगुप्तां लङ्कामिमां चेन्न स दूतधर्मः ॥ ३४ ॥

यद्वा दशग्रीवपुरावतंसं समूलमुत्पाट्य गिरिं त्रिकूटम् ।
अपीडयन् जानपदान् भुजाभ्यां वहन्नु देवं निकषा भवेयम् ॥ ३५ ॥

असिद्धकृत्येन मयोपनीते वृथावलिप्तेन महामहीध्रे ।
अगाधबोधस्य विभोः प्रतिष्ठा न वेद्मि किं वा फलयिष्यतीति ॥ ३६ ॥

अहं तु देवीमनवाप्य दृष्ट्वा प्रतिप्रयास्यामि न जातु देवम् ।
उत्तीरमब्धेर्भवतु स्थिता सा दिवं गता किन्नु रसातलं वा ॥ ३७ ॥

परिस्फुरत्यूरुभुजेक्षणं मे वामेतरं चिन्तयतः शिवानि ।
मनः प्रसादामलवृत्ति तावन्मन्ये निमित्तैरनपायिनीं ताम् ॥ ३८ ॥

चिन्तेयमास्तामिह भूरिशाखा प्रमोदखेदप्रकृतिः प्रकृत्या ।
भिनत्ति या धैर्यवतोऽपि धैर्यं वेणीव कूलं सरितः प्रवृद्धा ॥ ३९ ॥

सोऽहं त्वमुष्यां पुरि दृष्टिपातं सर्वत्र कुर्वन्नवधानबन्धुः ।
लभेय साध्वीमपि नाम सर्वे मयि प्रसादं वितरन्तु देवाः ॥ ४० ॥

इति व्यवस्यन् व्यवसायशौण्डः पिनेत्र विश्वं पुरमश्नुवानः ।
यत्नाद् विचिन्वन्नपि तामपश्यन्नारादिवाराममुवं प्रपेदे ॥ ४१ ॥

---

१. 'पु', २. 'रा', ३. 'मो' क. पाठः.

समृद्धिदूरीकृतनन्दनश्रीर्वाचालिता चित्ररुतैर्विहङ्गैः।
रत्नातपेन क्षपितान्धकारा या नाम जागर्त्यभिभूय विश्वम् ॥ ४२ ॥

स तत्र नानायुधवाहिनीभिर्निशाचरीभिर्गणशः परीताम्।
ददर्श नारीं विषवल्लरीभिर्दुरासदां कल्पलतामिवैकाम् ॥ ४३ ॥

धृतैकवेणीं भुवि केवलायां निषेदुषीं क्षौमकृतोत्तरीयाम्।
राहूपरुद्धस्य तुषारभानोः प्रभामिव प्रव्रजितां विरागात् ॥ ४४ ॥

प्रलम्बधूम्रालकराजि वक्त्रं तस्या दधच्छोककरावसक्तम्।
छिन्नाभ्रवीतं हिमविद्धपद्मव्यासङ्गि प्रभातभिवेन्दुबिम्बम् ॥ ४५ ॥

विशुद्धमुक्तामणिदामशुभ्रानालक्ष्य तस्या नयनाश्रुबिन्दून्।
स्तनद्वये स्पष्टकिणेऽवसक्तान् क्लिन्नान्तरात्मा कृपया शुशोच ॥ ४६ ॥

तस्याः परिक्लिष्टमृणालगौरेष्वङ्गेषु विभ्रत्स्वपि कान्तिमात्रम्।
आलक्ष्यतोच्चैः प्रियविप्रलम्भादाविष्कृतः कोऽपि दशाविशेषः ॥ ४७ ॥

तस्याः स जङ्घाप्रपदाङ्गुलीषु सञ्चारयन् दृष्टिमदृष्टचर्याः।
नालक्षयल्लक्षणबोधशौण्डः सुखापहां मङ्गलसूत्रहानिम् ॥ ४८ ॥

आलोकयन्नुत्तमयोषितं तामशक्यसर्गामपि पद्मयोनेः।
आपातविष्फारितभूरिहर्षः स्वया धियेत्थं विममर्श धीमान् ॥ ४९ ॥

शमावतंसं वपुरुद्वहन्ती कृताधिवासं नवयौवनेन।
शुचा कयाचित् परिभूयमाना केयं स्थिता राक्षसचक्रमध्ये ॥ ५० ॥

अमर्त्यवर्गेऽष्टविधेऽप्यमुष्या न सम्भवो नूनमनूनकान्तेः।
यतस्त्रयाणामपि विष्टपानां विराजतेऽसावधिदेवतेव ॥ ५१ ॥

निरर्गलं पर्यटता त्रिलोकीमधर्मशीलेन दशाननेन।
उच्चैरपात्रप्रतिपत्तिशोच्या बन्दीकृता किंस्विदियं जयश्रीः ॥ ५२ ॥

निर्मृष्टपिष्टातकगौरमस्याः कृशं वपुः पाण्डुतयाभिभूतम्।
इयं दशा हि प्रियविप्रलम्भादृते न जातु प्रभवेद् वधूनाम् ॥ ५३ ॥

---

१. 'तं', २. 'ब' क. पाठः. ३. 'च। तस्याः स ज', ४. 'अ' ख. पाठः.

पुमान् स को नाम न वेद्मि लोके स्रष्टा न तस्य ध्रुवमब्जयोनिः ।
इमामवस्थां मदनोपसृष्टामेषा परं यस्य कृते बिभर्ति ॥ ५४ ॥

एवं विमर्शोन्मथितप्रबोधे तस्मिन्ननिर्विष्टचराधिभारे ।
अदृश्यताभ्युद्धृतदीपिकाभिः स्त्रीभिः परीतः क्षणदाचरेन्द्रः ॥ ५५ ॥

परिष्कृतः स्वर्णमणिप्रवेकैर्निष्पादितैराभरणैरशेषैः ।
द्रुमैर्विचित्रस्तबकप्रसूनैः[1] स कर्णिकारैरिव नीलशैलः ॥ ५६ ॥

स राजहंसीमिव वायसस्तां त्रेताग्निवेदीमिव सारमेयः ।
शशाङ्करेखामिव धूमकेतुर्बलाद् वृषस्यन् निकषा बभूव ॥ ५७ ॥

अदर्शि तेन स्मरपीडितानां दशाविशेषः सकलोऽपि तत्र ।
न चापलं वाचि तथाविधस्य प्रवक्तुमीशश्चतुराननोऽपि ॥ ५८ ॥

अनात्मनीनं विपथप्रवृत्त्या सा तं सनिर्वेदमवेक्षमाणा ।
पराङ्मुखी दिङ्मुखकीर्त्यमानचारित्रशुद्धिर्निभृता बभूव ॥ ५९ ॥

तस्याः स्वसङ्कल्पविरोधि शीलं निर्ज्ञाय दुर्दान्तमदाधिरूढः ।
अत्स्यामि धक्ष्याम्युत वामभावामित्यूचिवानुच्चलितस्ततोऽभूत् ॥ ६० ॥

तस्मिन् प्रयाते करुणैः प्रलापैर्देव्याः श्रुतिध्वंसिभिरस्तधैर्यैः ।
अवाप्य विश्वासमनभ्रवृष्टिस्पष्टोपमो मारुतिराविरासीत् ॥ ६१ ॥

सा तं पुरस्तादवतस्थिवांसं परिष्कृतं प्रश्रयभूषणेन ।
आलक्ष्य रक्षःप्रहितासु मायास्वविश्वसन्त्यन्यतमामर्मस्त ॥ ६२ ॥

विश्वरक्षणजागरूककुकुत्स्थनन्दनशासन-
क्षिप्रलङ्घितबह्वपायपयोधिदर्शितसाहसम् ।
बद्धकौतुकमीक्षमीक्षमचिन्तितोपनतं कपिं
प्रत्ययं निबबन्ध तत्र निरत्ययं जनकात्मजा ॥ ६३ ॥

इति रघुवीरचरिते द्वादशः सर्गः ।

---

१. 'स्य' ख. पाठः. २. 'वशप्र', ३. 'नि' क. पाठः.

## अथ त्रयोदशः सर्गः ।

तामशोकवनिकामुपाश्रितां रामधर्ममहिषीं विजज्ञिवान् ।
प्रह्वभावमवलम्ब्य धीमतामग्रणीरुपससाद मारुतिः ॥ १ ॥

अञ्जसाभिपततः पुरस्तदा तस्य तत्प्रथममन्तरात्मनि ।
सन्निकर्षमुपगम्य भाषितुं न क्षणं समभवत् प्रगल्भता ॥ २ ॥

विप्रलम्भविषमस्थितेर्विभोस्तद्दशान्तरमनुस्मरन् धिया ।
अञ्जलिं शिरसि भक्तिबन्धुरं कल्पयन्निति जगाद भारतीम् ॥ ३ ॥

ऋश्यशृङ्गतपसां प्रभावतः कोसलेन्द्रदुहितुर्बभूव यः ।
यातुधानकुलकाननानलः सानुजो जयति जानकीपतिः ॥ ४ ॥

येन पूर्वमुदमाथि ताटका कौशिकक्रतुररक्षि तेजसा ।
भज्यते स्म धनुरैश्वरं हृता मैथिली पथि जितश्च भार्गवः ॥ ५ ॥

येन सत्यनिरतेन दुर्लभं पैतृकं पदमपास्य दूरतः ।
दण्डकेषु चरता तपस्विनां विक्रमेण परिरक्षणं कृतम् ॥ ६ ॥

येन शूर्पणखयाभिभूतया प्रेषितेषु खरदूषणादिषु ।
बिभ्रता धनुरगस्त्यलम्भितं दर्शितं स्वमपदानमूर्जितम् ॥ ७ ॥

यत्र हेममृगवाञ्छिते गते लक्ष्मणे च तमनुप्रयापिते ।
भिक्षुरूपमवलम्ब्य मायया कालिता दशमुखेन जानकी ॥ ८ ॥

तेन कूटहरिणं निजघ्नुषा जग्मुषा पुनरपि स्वमाश्रमम् ।
तत्र धर्मगृहिणीमपश्यता चेष्टितानि कतिचिद् वितेनिरे ॥ ९ ॥

नात्ति निःश्वसिति भूरि निद्रया वर्ज्यते च विलपत्यहर्निशम् ।
एहि मैथिलि! परिष्वजस्व मां जीवयेति च वचांसि मुञ्चति ॥ १० ॥

गौतमीतटवनेषु सानुषु क्ष्माभृतामथ गुहोदरेषु च ।
दीर्घिकासु सकलासु दीर्घधीरन्वियेष सहधर्मचारिणीम् ॥ ११ ॥

राघवेति रुदतीं दशाननस्तां हरन् निरुरुधे जटायुषा ।
तस्य तत्प्रथनलङ्घितायुषः प्रेतकर्म विधिवद् व्यधत्त सः ॥ १२ ॥

---

१. 'ज' क. पाठः.

शैलजाकूलवनानि गच्छता मैथिलीचरणपङ्कजच्युतम् ।
दृश्यते स्म पथि रत्ननूपुरं तत् किलास हृदयावलम्बनम् ॥ १३ ॥

दक्षिणां दिशमनु प्रतस्थिवान् योजनायतभुजेन रक्षसा ।
वारितस्तदृषिशापवागुरागोचरं विभुरमोचयत् क्षणात् ॥ १४ ॥

किञ्च पञ्च कपयस्तदा वयं माल्यवच्छिखरसङ्गतास्तया ।
क्षिप्तमाभरणमुत्तरीयवत् स्वामिनः पुनरकुर्म सन्निधौ ॥ १५ ॥

सिद्धया पथि मतङ्गशिष्यया सङ्गतस्तदुपदेशगौरवात् ।
सख्यमेत्य कपिनार्कसूनुना तत्कृते स निजघान वालिनम् ॥

तत्पदे निजपदाश्रयं कपिं सोऽभिषिच्य कृतसंविदत्यगात् ।
कृच्छ्रमभ्युपगतो घनागमे तां विना बत निशा युगोपमाः ॥ १७ ॥

मत्तकेकिविरुतैररुन्तुदैर्मारुतैरपि कदम्बवासितैः ।
निर्भरोद्गतसिलिन्ध्रया भुवाप्युच्चचाल विषमस्तदाशयः ॥ १८ ॥

मुह्यति क्षणमथो विबुध्यते जानकीति लपति प्रमुञ्चति ।
अश्रु नेत्रकमलोदितं मुहुर्लक्ष्मणेन स शुचानुवर्त्यते ॥ १९ ॥

नो विमुह्यति स नो विबुध्यते मौनभाग् बहुविधं प्रभाषते ।
न स्थितिं भजति याति न प्रभुर्धर्मदारविरहज्वरातुरः ॥ २० ॥

केकिनं कमपि नर्तनोन्मुखं वीक्ष्य चारुबहुबर्हमण्डलम् ।
पुष्पचित्रितशिरोरुहभ्रमात् तां स्मरन्नभिससार स क्षणम् ॥ २१ ॥

किञ्च सन्तमसिनीषु रात्रिषु प्रावृषेण्यघनगर्जितेषु सः ।
संश्रुतेषु दलिताशयः प्रभुश्चापलं बहुतमं किलातनोत् ॥ २२ ॥

अस्तमेतु बत तद्दशान्तरं मा स्म भूत् तदहितेष्वपि क्वचित् ।
यद् विलोक्य वनदेवता धृतिं सम्प्रहाय रुदितानि चक्रिरे ॥ २३ ॥

उद्यतः शरदि कृत्यमात्मनः सङ्क्रमय्य कपिराजि तत्सखः ।
सत्वरं मृगयितुं प्रभुः प्रियां प्राहिणोत् प्रतिदिशं प्लवङ्गमान् ॥ २४ ॥

तावदप्रतिहतं विमृग्यतां यावदर्कमहसामवस्थितिः ।
मासमात्रमवधिश्च तद्विधावित्यभूत् कपिषु भर्तृशासनम् ॥ २५ ॥

---

१. 'वि', २. 'प्रियां प्रभुः प्रा' ख. पाठः.

तत्र वानरचमूषु निर्गतास्वाज्ञया कपिविभोरलङ्घ्यया ।
अस्मदादिविरलाः प्लवङ्गमा दक्षिणां प्रति दिशं प्रतस्थिरे ॥ २६ ॥

किञ्च दिष्टकृतपूर्ववासनावज्रलेपघटिताशयः प्रभुः ।
सप्रसादमुपहूय मत्करे न्यस्यति स्म निजमङ्गुलीयकम् ॥ २७ ॥

ऊचिवान् स पुनरित्थमाधिना दीर्घमुष्णमपि निःश्वसन् मुहुः ।
संस्मरन् परिणयोत्सवं पुरा वर्तनं च तदनन्तरोचितम् ॥ २८ ॥

क्रीडितानि हृदयङ्गमानि नौ यानि यानि पुरवासिनोः पुरा ।
तान्यशेषमपि नाम मैथिली मानसेन न तु जातु विस्मरेत् ॥ २९ ॥

तादृशं यदभिजन्म जीवितं यच्च यच्च वसु या च बन्धुता ।
मारुते! बहु वचः प्रमृज्यतां मैथिली सकलमित्यवेहि मे ॥ ३० ॥

यत्र तेऽस्ति हनुमन्! पितुर्गतिस्तत्र दाशरथिरेति सानुजः ।
तद्वदित्थमनिरुद्धतेजसा तेन सत्यवचसा प्रतिश्रुतम् ॥ ३१ ॥

अङ्गुलीयकमिदं नय प्रियां स्वस्ति तेऽस्त्विति च तेन गर्वितः ।
दक्षिणां दिशमुपेयुषीमहं वानराधिपचमूमनुद्रुतः ॥ ३२ ॥

लङ्घितप्रचुरमार्गमम्बुधेस्तीरमेत्य बहुविघ्नदुस्तरम् ।
तं विलङ्घ्य मरुतामनुग्रहादागतोऽस्मि दिवसात्यये लघु ॥ ३३ ॥

द्वारि गोपुरवरस्य तस्थुषीमत्र राक्षसपुराधिदेवताम् ।
अस्तशङ्कमभिपीड्य दूरतस्तामपास्य तदहं प्रविष्टवान् ॥ ३४ ॥

नाकनागपुरभूतलौकसां तानि तानि भवनानि पश्यतः ।
या न विस्मयगतिर्ममाभवत् सा मदीयहृदयेऽद्य नृत्यति ॥ ३५ ॥

धाम राक्षसपतेरवेक्षितं दीर्घिकाश्च कनकाम्बुजोज्ज्वलाः ।
सङ्गताश्च मणिहर्म्यभूमयः सर्वतः परिमितात्मना मया ॥ ३६ ॥

चन्द्रिकाकबलितेषु दिङ्मुखेष्वस्तसुप्तिषु निशाचरीषु च ।
अत्र पत्रबहुले लतान्तरे निश्चलः क्षणमहं निलीनवान् ॥ ३७ ॥

---

१. 'म्प्र' क. पाठः.

तत्र तावदिह रक्षसां प्रभोर्वाचमभ्युपगतस्य शृण्वतः ।
मैथिलीति जनकात्मजेति मे निश्चयाय समनाहि चेतसा ॥ ३८ ॥

तत्र दुर्वचचिकीर्षितोद्यते दिष्टयोगविवशे व्यपेयुषि ।
राक्षसीष्वपहतासु निद्रया प्रादुरासिषमिहाहमन्तरे ॥ ३९ ॥

स्वामिनि ! स्थिरशुचिव्रते ! सतीमार्गसञ्चरणपूर्वगामिनि ! ।
विप्रयुक्तरघुनाथजीवितम्लानिहारिणि ! दृशा पुनीहि माम् ॥ ४० ॥

अद्य जन्म सफलं मम प्रभोरादरश्च सविशेषमुन्मुखः ।
भर्तुरुच्छ्वसितमाकुलं मनो देवि ! यत् त्वमसि दृष्टिगोचरा ॥ ४१ ॥

माययेह भवितव्यमेतयेत्येवमात्मवति ! मा स्म भून्मतिः ।
रामनामपरिमुद्रितं त्वया दृश्यतां तदिदमङ्गुलीयकम् ॥ ४२ ॥

वाचमित्थमभिधाय सूनृतां स्वार्थसिद्धिकृतसम्मदोदयः ।
स्मेरमंशुभिरुपाहरत् पुरः स्वामिनामशुभमङ्गुलीयकम् ॥ ४३ ॥

अञ्जलौ कृतवती तदञ्जनाभ्यासशून्यविमलाश्रुलोचना ।
हर्षशोकमिलितेन चेतसा चिन्तयन्त्यखिलसुन्दरं प्रियम् ॥ ४४ ॥

ज्यानिपीडनविघृष्टकोटि तद् दृष्टपूर्वमवधार्य धीमती ।
भर्तृसङ्गमरसायनोत्सुका किंचिदुच्छ्वसितमाप मैथिली ॥ ४५ ॥

बिभ्रती सुचिरसम्भृतां शुचं सम्मदं च हृदि तावदुत्थितम् ।
सास्रु निःश्वसितमुष्णशीतलं मुञ्चती करुणमित्यवोचत ॥ ४६ ॥

अङ्गुलीकिसलये धृतं प्रभोर्भूषणस्य जगतां विभूषणम् ।
एतदेतदृषिभिः समागतैः स्पर्शितं खरवधप्रमोदिभिः ॥ ४७ ॥

भर्तुरभ्युपगमे निराशतामुद्वहद्भिरसुभिर्यियासुभिः ।
एतदेत्य हनुमन्तमप्ययमुं सम्प्रति स्थितिरिहावलम्बिता ॥ ४८ ॥

स्तोकतां रजनिरेति मारुते ! वारुणीं दिशमुपैति चन्द्रमाः ।
रक्षिकास्वपि भवेत् प्रबुद्धता नावधिश्च परिदेवितं प्रति ॥ ४९ ॥

---

१. 'व्ययं स' क. पाठः.

श्रेयसां हि बहुविघ्नता भवेन्मादृशीषु खलु सा विशेषिणी ।
तत् प्रयाहि मतिमन्! यथागतं दिष्टमावहतु मङ्गलानि ते ॥ ५० ॥

तद्वचोमृतगृहीतपारणामत्र मां कुशलिनीं निवेदय ।
मत्कृते कृतिपुरोग ! मा चिरं मावसीदतु च भर्तुरुद्यमः ॥ ५१ ॥

येनकेनचिदुपेत्य वर्त्मना सानुजः प्लवगसेनया वृतः ।
रावणं सहबलं निहत्य मां स्वां पुरीं नयतु कोसलेश्वरः ॥ ५२ ॥

किञ्च तात! पुनरेतदुच्यतां प्रत्ययाय तव वाचि मद्वचः ।
आधिना सकलसत्त्वबाधिना भिद्यमानहृदया वदाम्यहम् ॥ ५३ ॥

एकदा विपिनगोचरां पुरा मामुरोजभुवि वासवात्मजः ।
वायसः परितुतोद तत्कृते ब्राह्ममस्त्रमसृजत् पतिर्मम ॥ ५४ ॥

तेन भूरिमहसाभिपीडितः पर्यटञ्जगदशेषमात्मनः ।
नाभ्युपेत्य शरणं विभोः पुरः पाहि मामिति वदन् प्रपन्नवान् ॥ ५५ ॥

तं कृपालुरतिदुर्विनीतमप्येकनेत्रविकलं व्यधात् तदा ।
प्रेम्णि जाग्रति तडिल्लताचलं तन्नृणां खलु वधूजनं प्रति ॥ ५६ ॥

अस्त्रमुन्मिषति तत्तथापराण्याश्रितेष्वपि जनेषु सा दया ।
तेजसामपि समग्रता विभौ मत्कृते तदखिलं बताफलम् ॥ ५७ ॥

सा कथा विरमतूत्तरोत्तरं ध्यायतां हृदयभेदकारिणी ।
विद्विषत्परिभवासहिष्णुना तेन किं स्वयशसे प्रवर्तिता ॥ ५८ ॥

वाचमित्थमभिधाय तं प्रति प्रांशुभिः खचितमंशुसञ्चयैः ।
केशवाससुभगं शिखामणिं प्रश्रिता विनिदधे तदञ्जलौ ॥ ५९ ॥

पत्युरङ्घ्रिकमलान्तिकं त्वया नीयतामियमविघ्नमस्तु ते ।
त्वत्कृतोपकृतिवासना मयि प्रादुरस्तु जननान्तरेष्वपि ॥ ६० ॥

एवमुक्तवति रामजीविते तत् प्रणम्य विहितप्रदक्षिणः ।
दक्षिणः परबलावमर्दने मर्दितुं पुरमथ प्रचक्रमे ॥ ६१ ॥

---

१. 'त्व', २. 'ब' क. पाठः.

यावदुद्यमगतः स मर्दनं प्राप्य तावदुदयाचलं रविः ।
ज्ञातुकाम इव शिष्यविक्रमं प्राहिणोत् पुरि करांश्चरानिव ॥ ६२ ॥
लुञ्छते स्म कुसुमोज्ज्वला लताः शाखिनः स मरुतो न्यपातयत् ।
हर्म्यभूमिषु ससर्प वापिकास्तीरभङ्गविषमा व्यलोलयत् ॥ ६३ ॥
हिक्कया प्रलयमेघगर्जितस्फारभीमतमया निशाचरान् ।
देवदानवजितोऽप्यनेकशस्त्रासयन् समचरत् प्रतिद्रुमम् ॥ ६४ ॥
तस्य बालचलनं तडिल्लतां व्यात्तमास्यविलमद्रिगह्वरम् ।
अग्निकूपयुगलं दृशोर्द्वयी भोगिनं च रसना पराभवत् ॥ ६५ ॥
तं तथाविधमवेक्ष्य राक्षसा नूतनाभिभवभूरिमन्यवः ।
आत्मनाशफलकर्मलोलुपाः प्राप्य रावणमिति व्यजिज्ञपन् ॥ ६६ ॥
भज्यते स्म विपिनं समीकृता सौधभूमिरवरुग्णकुट्टिमा ।
उच्छ्रितासु वलभीषु चोत्प्लुतं मर्कटेन भयदेन केनचित् ॥ ६७ ॥
तोषितः पशुपतिस्तपस्यता तोलितश्च तदधिष्ठितो गिरिः ।
भ्रंशितास्त्रिदिवतः सुरास्त्वया तत् समस्तमधुना खिलीकृतम् ॥ ६८ ॥
व्याहृता निशि सुखेन मैथिली तेन तन्मुखमतः प्रसादवत् ।
लक्ष्यते श्रुतिषु नः प्रसज्यते रामलक्ष्मणकपीन्द्रकीर्तनम् ॥ ६९ ॥
तच्चरित्रमवगम्य तन्मुखादुच्चकोपचलितः क्षपाचरान् ।
वन्ध्यकर्मनिरतः स मारुतेर्बन्धनाय निधनाय चादिशत् ॥ ७० ॥
तैर्नियोगमवलम्ब्य शासितुः मङ्क्षु तैः सपदि मारुतात्मजः ।
उद्यमेन भुवनक्षयक्षमैरभ्ययायि शलभैरिवानलः ॥ ७१ ॥
हन्तुमापतत एव तान् कपिः प्रेक्ष्य तत्प्रवसितं व्यधात् स्वयम् ।
मुष्टिभिर्विटपिभिर्विशङ्कटैर्हुङ्कृतैर्विचलनैश्च वालधेः ॥ ७२ ॥
तेषु दीर्घतमनिद्रयावृतेष्वेत्य सायकमुचं न्यपातयत् ।
विक्रमेष्वनवमं दशाननादिन्द्रजित्सहजमक्षमक्षतः ॥ ७३ ॥
त्रासतस्त्रुटितशृङ्खलैर्गजैर्मन्दुरा विघटिता तदाश्रयैः ।
वाजिभिर्झटिति पत्तिपङ्क्तयस्ता बभूवुरयथास्ववृत्तयः ॥ ७४ ॥

---

१. 'खि' ख. पाठः.

तत्र केचिदपतन् भयातुरास्तेष्वधीयत पदं तथा परैः।
केऽपि लोलनिजशस्त्रविक्षता मुक्तशस्त्रमपरैः पलायितम् ॥ ७५ ॥
तत् तुषारगिरिकूटसन्निभं सत्त्वमुग्रमवलोक्य योषितः।
त्यक्तपुत्रपतिसद्मविह्वलाः प्राणरक्षणपरा निलिल्यिरे ॥ ७६ ॥
राक्षसाः प्रथितविक्रमौजसस्तेन मन्त्रितनयाश्च पातिताः।
मुष्टिभिः करचपेटपीडनैरुग्रबालचलनैश्च दुर्धरैः ॥ ७७ ॥
इत्यवेक्ष्य पुरमाकुलं भिया भ्रातरं च विरतं महाहवे।
राक्षसानपि बहून् परेयुषः कोपमिन्द्रजिदपारमादधे ॥ ७८ ॥
तं कृतान्तधनुरुग्रदर्शनभ्रूविभङ्गचकितासुरामरम्।
वीक्ष्य तोरणकृतस्थितिः कपिः सङ्गराय समनह्य चेतसा ॥ ७९ ॥
रावणिस्तमपदिश्य सायकान् प्राहिणोदरिकुलावसायकान्।
क्षिप्रमापतत एव तान् कपिः प्रत्यमुञ्चदभिगृह्य तं प्रति ॥ ८० ॥
अस्त्रमम्बुजभवाधिदैवतं दुर्निवारमभिमन्त्र्य मन्त्रवित्।
बन्धनाय शिखिबन्धुसूनवे प्राक्षिपच्छितमुखं शिलीमुखम् ॥ ८१ ॥
अप्रधृष्यमहिमा चराचरैरभ्युपायमुचितं विचिन्तयन्।
संजिहीर्षुरखिलां पुरीं रिपोरन्वमोदत स तच्चिकीर्षितम् ॥ ८२ ॥
बद्धमस्तमितसर्वचेष्टितं भस्मरुद्धमिव जातवेदसम्।
किङ्करा दशमुखात्मजाज्ञया भर्तुरुद्धृतमुपाहरन् पुरः ॥ ८३ ॥
तं पुरप्रमथनापराधिनं वीक्ष्य कोपकलुषैर्विलोचनैः।
वैरमत्यवधि तेन बिभ्रता पेटुम सुमवदातुमुद्यतम् ॥ ८४ ॥
बन्धखेदमिषजिह्मया दृशा वीक्ष्य चीत्करणदर्शितद्विजः।
स्रस्तबालधि भयं विभावयन्नङ्केषु स निजेष्वलीयत ॥ ८५ ॥
स्नेहदिग्धसिचयाभिवेष्टितं बालमिन्द्रधनुरागतं कपिः।
यातुभिर्विरचिताग्निसङ्क्रमं पर्यचोदयदितस्ततः क्षणात् ॥ ८६ ॥
निर्धुतास्त्रमहिमा स पुप्लुवे सद्मपङ्क्तिषु निशान्तयोषिताम्।
ऋद्धिमत्सु शिबिरेषु निर्दहन् पत्तनेषु विशिखान्तरेषु च ॥ ८७ ॥

---

१. 'तं तु' ख. पाठः. २. 'द्ध' क. पाठः.

भस्मसात्कृतवता पुरीं पुनर्भग्नसालविशिखाट्टसङ्क्रमाम् ।
क्षिप्रमम्भसि निमज्ज्य वारिधेः साधु तेन निरवापि पावकः ॥ ८८ ॥

तं प्रदेशमनलो न लीढवान् यत्र मैथिलसुता निषीदति ।
अद्भुतं चरितमस्य मारुतेर्नानुगन्तुमिह कोऽपि शक्तिमान् ॥ ८९ ॥

खेचरैरिति परस्परोदितां वाचमन्तरवधार्य निर्वृतः ।
स्वप्रतीक्षणपरायणं पुनः प्रत्यवाप कपिसैन्यमुत्प्लुतः ॥ ९० ॥

सङ्गत्य वानरवरैरुपचारमेभ्यः[1]
सङ्गृह्य जाम्बवति सप्रणयं प्रणम्य ।
तेभ्यः समुद्रतरणात् प्रभृति स्ववृत्तिं
लङ्कां च दुर्गविषमाभिभवामवोचत् ॥ ९१ ॥

चूडामणिं तदुपनीतमवेक्ष्य हृष्टाः
प्रत्यागता मधुवनं प्रतिपद्य सद्यः ।
तत्पालकं दधिमुखं विषमप्रवृत्तिं[2]
निर्भर्त्स्य ते मधु पपुर्हनुमत्सहायाः ॥ ९२ ॥

नवमधुनिषेवणादुपचितमनोरथा
मथितवनपादपा रभसजववायुना ।
परिहसनलोलुपा दधिमुखपराभवा-
दनिभृतमदोदया विपिनभुवि रेमिरे ॥ ९३ ॥

कम्पयन्तः क्षितिं खं पिबन्तः क्षणा-
दापतन्तः[3] समं व्यञ्जयन्तः स्मयम् ।
पूरयन्तो दिशः प्रेरयन्तो मिथः
कार्यलाभोर्जिता राममभ्यासदन् ॥ ९४ ॥

प्रणम्य प्रणम्य स्थितेषु स्थितेषु
प्लवङ्गेषु निश्छिद्रमच्छिद्रकर्मा ।
स्वयूथाधिपैः कौतुकाद् दत्तमार्गः
प्रभोरग्रतः पावनिः प्राग्रतोऽभूत् ॥ ९५ ॥

---

१. 'त्य' क. पाठः. २. 'त्तं' ख. पाठः. ३. 'चरन्तः', ४. 'ध्या' क. पाठः.

प्रसन्नाननान् वीक्ष्य तानिङ्गितज्ञ-
स्तथा मूर्ध्नि बद्धाञ्जलिं चाञ्जनेयम् ।
किमालोकिता मैथिली व्याहृता किं
किमु प्राणितीति प्रभुः पर्यपृच्छत् ॥ ९६ ॥

ततोऽनुमान्य वानरान् निरीक्ष्य जाम्बवन्मुखम् ।
मितं परिष्कृतं गुणैर्जगाद मारुतिर्वचः ॥ ९७ ॥

इतो याताः सर्वे खलु वयमवाचीं प्रति दिशं
विलङ्घ्याद्रिं विन्ध्यं मरुभुवमुपेताः श्रमभृतः ।
गुहामाविश्यैकां क्षुधमुपशमय्येश्वरवशाद्
विनिष्क्रान्तास्तस्याः प्रसभमभवामाम्बुधितटे ॥ ९८ ॥

युष्मत्कथाश्रवणजातगरुत्प्ररोह-
सम्पातिवाचमनुभूय ततोऽवगम्य ।
देवीगतिं जलनिधेस्तरणाय सज्जाः
सर्वे बभूविम च जाम्बवतानुशिष्टाः ॥ ९९ ॥

अनुमतेन समस्तवनौकसामपि च जाम्बवतः पितुराज्ञया ।
जलधिलङ्घनकर्मणि चोदितः प्रकटचापलवृत्तिरयं जनः ॥ १०० ॥

शरणद ! भुवनत्रयस्य युष्म-
च्चरणपरागपवित्रितोत्तमाङ्गः ।
द्रुततरमपारविघ्ननिघ्नं
जलनिधिमर्क इवाम्बरावकाशम् ॥ १०१ ॥

द्वारि स्थितामुत्तरगोपुरस्य मूर्तां श्रियं दूरमपास्य सायम् ।
पुरीं त्रियामाचरनेतुरुद्दामहं तनुं व्याधिरिव प्रविष्टः ॥ १०२ ॥

आज्ञाविक्रममानसम्पदुदयैः सेनानिवेशेन च
स्फीतैः काननशैलकृत्रिमसरिद्वीचौघवंशैरपि ।
यन्त्रारोहसशिंशुमारपरिखावप्रैश्च विष्वग्गतै-
र्दुर्गत्वं दशकन्धरेण रचितं छन्नोऽस्मि निर्विष्टवान् ॥ १०३ ॥

शरपरिणतिपाण्डराङ्गयष्टीरपरिमिताः सुरदैत्यमर्त्ययोषाः ।
प्रियजनविरहप्रसुप्तलीला दशवदनापहृतास्ततोऽन्वपश्यम् ॥ १०४ ॥

कलामिन्दोरन्त्यामिव हरिद्दयाशातटगतां
परिक्षीणां क्षोणीतलकृतनिवासामुपवने ।
करालाकाराभिर्निशिचरवधूभिः परिवृतां
ततोऽपश्यं देवीमविचलितचारित्रमहिताम् ॥ १०५ ॥

प्रादुर्भूतः प्रीतमनास्तां प्रतिनत्वा रामस्याहं दूत इति ज्ञापितवृत्तः ।
भूरिच्छायामङ्गुलिनिद्रामथ तस्यै विश्वासाय प्रादिशमारादुपसृत्य ॥

विरहविषानलशिखया लीढैः प्राणैर्यियासुभिर्देव्याः ।
अमृतमिवाभिज्ञानं लब्ध्वा स्थैर्यं निरामयं भेजे ॥ १०७ ॥

अवलम्ब्य युष्मदाज्ञां समयोक्ष्यत चेदयं जनो न तया ।
देव्या दशातिरूढा ध्रुवमभविष्यत् क्षणादिवान्यान्या ॥१०८॥

निःश्वसिति स्म रुरोद शुशोच च विललाप त्वां स्मारं स्मारम् ।
अङ्कमङ्कमनयच्चैतत् पर्यष्वजत च लब्धानन्दम् ॥ १०९ ॥

विपिनभुवि जयन्तध्वाङ्क्षवित्रासहेतोः
प्रहितकमलजास्त्रं वृत्तमुच्चार्य देव्या ।
अथ निरतिशयाय प्रत्ययायोपजह्रे
बहु बहु विलपन्त्या देव! चूडामणिस्ते ॥ ११० ॥

आदायैनमशोषिताट्टशिबिरां निर्दह्य लङ्कापुरीं
हत्वा राक्षसपुङ्गवान् जलनिधिं निस्तीर्य वेगादिव ।
संगत्याङ्गदजाम्बवत्प्रभृतिभिर्यूथाधिपैरागतः
सीतावल्लभ! लक्ष्मणाग्रज! विभो! युष्मत्पदाभ्यां नमः ॥१११॥

इति रघुवीरचरिते त्रयोदशः सर्गः ।

## अथ चतुर्दशः सर्गः ।

श्रुत्वा श्रुतिसुखां वाचं मारुतेः प्रियवादिनः ।
निपीयेवामृतं रामो भृशमाप्यायितोऽभवत् ॥ १ ॥
प्रत्यर्पितं कपिर्देव्या स्मयमानमिवांशुभिः ।
प्रभोः पुरः प्रणम्योच्चैश्चूडामणिमुपाहरत् ॥ २ ॥
समर्प्यमाणमादाय स तं जीवातुमात्मनः ।
अङ्गेष्वङ्गेष्वनङ्गार्त्या चकार क्लेदिताशयः ॥ ३ ॥
वारं वारं नमस्कुर्मः शुभं कर्म पुराकृतम् ।
यद्वशाद् रघुराजेन प्लवगः परिषस्वजे ॥ ४ ॥
व्यलपत् संस्मरन् सीतां नामृष्यच्चिन्तयन् रिपुम् ।
निशश्वास विशश्वास कर्म लक्ष्मणचापयोः ॥ ५ ॥
ततोऽनुमान्य सुग्रीवं स्निग्धमालोक्य मारुतिम् ।
अङ्गदं जाम्बवन्तं च वाचा सम्भाव्य हृद्यया ॥ ६ ॥
गच्छामस्तत्र यत्रास्ते स रावण इति ब्रुवन् ।
प्रातिष्ठताश्रमं पुण्यं प्रणम्य प्रवणाशयः ॥ ७ ॥
ततः कपिमयी भूमिरन्तरिक्षं च तन्मयम् ।
चचाल चलिते तस्मिन् शैलारण्यं च तद्विधम् ॥ ८ ॥
दक्षिणां दिशमुद्दिश्य यान्ती वानरवाहिनी ।
आगच्छन्ती दिगन्तेभ्यो नेयत्तामभ्यपद्यत ॥ ९ ॥
मा शब्दो मा च सम्बाधो मा सङ्घर्षश्च वानराः[1] ।
इति जाम्बवतादिष्टा नीता नीलेन सा चमूः ॥ १० ॥
हनूमद्वालिपुत्राभ्यामुदूढौ रामलक्ष्मणौ ।
उभावुत्साहबोधाभ्यां पराक्रमनयाविव ॥ ११ ॥
ज्योतिर्मुखः सुषेणश्च तारः शतबलिर्नलः ।
यूथाधिपा गजाद्याश्च कोटिशो रुरुधुर्नभः ॥ १२ ॥
सरामदूतः सुग्रीवः ससौमित्रिश्च राघवः ।
कृतसङ्ग्रामसन्नाहौ पृतनां तामनुद्रुतौ ॥ १३ ॥

---

१. 'वाक्यं भृ' क. पाठः. २. 'रा' ख. पाठः. ३. 'ज्ञः', ४. 'मूः ॥ 'वालिपुत्रः सु', ५. 'भः ॥ राघ' क. पाठः.

अतश्चेतश्च सम्भूता समूलोद्धृतपादपा[1] ।
विरराम न सा सेना प्रावृषीव महापगा ॥ १४ ॥

रामप्रणीतिना नीता सेनानौका जवोल्बणा ।
विपुलोत्कलिकोत्ताला वेलां सिन्धोरुपासदत् ॥ १५ ॥

एलाकिसलयैः स्फीतैरास्तीर्णायां भुवि प्रभुः ।
आस्त तालीवनच्छायाशमितातपवैभवः ॥ १६ ॥

सागरः सादरं तस्मै सगरान्वयमौलये ।
मणिरत्नान्यनर्घाणि वीचिहस्तैरुपाहरत् ॥ १७ ॥

त्वरामत्वरमाणोऽपि प्रियाविरहनिस्सहः ।
अकरोन्मकरावासं तरीतुं दुस्तरं ततः ॥ १८ ॥

रावणस्य शुको नाम चारो मायासु कोविदः ।
गृहीतः कपिभिः कृच्छ्राद् देवेन प्रतिमोचितः ॥ १९ ॥

एवं स्थितं महावीरमवगम्य दशाननः ।
सम्भूय मन्त्रिभिः स्वार्थे मन्त्रयामास मन्त्रवित् ॥ २० ॥

मदमायासहायस्य पुरा सीतां हरिष्यतः ।
यस्यामात्येषु मन्त्रे च स्मृतिलेशोऽपि नाभवत् ॥ २१ ॥

अवलेपमशान्तानां भ्रंशयत्यापदागमः ।
समुच्छ्रितं नदीकूलं वेणीवेग इवोद्धतः ॥ २२ ॥

स सान्त्वपूर्वमानीय सचिवान् मन्त्रसम्मतान् ।
प्रयुक्तसमुदाचारान् गिरमित्थं समाददे ॥ २३ ॥

विवेकोऽभ्युचितज्ञानं भर्तृचित्तानुसारिता ।
एतत्त्रयममात्यानां गुणः शश्वत्सुखावहः ॥ २४ ॥

अमात्यपाशबद्धानां जनतानां गवामिव[2] ।
अतिचारनिवृत्त्यर्थं नियोगः[3] खलु भूमिपः ॥ २५ ॥

---

१. 'गा ॥ हनूमद्वालिपुत्राभ्यामुद्वूढौ रामलक्ष्मणौ । उभावुत्साहबोधाभ्यां पराक्रमनयाविव ॥ रामप्रणिधिना' क. पाठः. २ 'दिवत् । अ', ३. 'यो' ग. पाठः.

रागरोषौ मदारूढौ गन्धाश्वद्विरदाविव ।
उन्मार्गगौ न जानीतः प्रशमप्रग्रहाङ्कुशौ ॥ २६ ॥

कृत्वा भारममात्येषु भक्तेषु मतिमत्सु यः ।
विश्वसन् वर्तते राजा स परैर्नाभिभूयते ॥ २७ ॥

नृपश्रीर्मन्त्रिणा हीना कर्णधारेण नौरिव ।
विपत्तरङ्गसंक्षोभैरपविद्धावसीदति ॥ २८ ॥

अतिलङ्घ्य महावीरं वालिनं तत्पदे लघु ।
स्थापितेन ससैन्येन सुग्रीवेण समागतः ॥ २९ ॥

पश्यन् मम पुरीमेतां हनुमद्वाक्यदर्पणे ।
समुद्रवेलामासाद्य तरणे कृतनिश्चयः ॥ ३० ॥

लक्ष्मणाख्यैर्निजप्राणैर्भजन्नयुतसिद्धताम् ।
तत्रास्ते दुर्धरो रामः किंवदन्तीति मय्यभूत् ॥ ३१ ॥

तदत्र प्रतिकर्तव्यं क्षमं च द्विषतः प्रति ।
कर्मणामप्यशैथिल्यं भवद्भिरवधार्यताम् ॥ ३२ ॥

निशम्य तद्वचस्तस्य व्यसनापहृतात्मनः ।
सकुम्भकर्णास्ते सर्वे साहसानि व्यजिज्ञपन् ॥ ३३ ॥

आकर्ण्य वचनं तेषामपमार्गप्रवर्तिनाम् ।
तत्र सन्निहितो वाचमाबभाषे विभीषणः ॥ ३४ ॥

श्रुतं किन्तु प्रहस्ताद्यैर्मन्त्रिभिर्भर्तृभाषितम् ।
यस्मिन्नस्ति नयप्राणं राजतन्त्रमशेषतः ॥ ३५ ॥

भ्रातर्मदीया रसना त्वां प्रभाषितुमीहते ।
अनाश्रवा सती क्षान्त्या सौभ्रात्रवशवर्तिनी ॥ ३६ ॥

आ जन्मनः प्रवृत्तस्य प्रारम्भपरिणामयोः ।
एकधैव स्थितं कर्म पुरुषस्यातिदुर्लभम् ॥ ३७ ॥

यदा जातोऽस्यपनये तदाप्रभृति ते रुचिः ।
यथामति यथाकालं प्रवक्ष्यामि समासतः ॥ ३८ ॥

बलिमाहिष्मतीनाथकपिराजैः पराभवम् ।
प्राप्तोऽपि त्वं न जानीषे भाविनं व्यसनागमम् ॥ ३९ ॥

फलमूलकृताहारांस्तापसान् काननौकसः ।
जटिनश्चीरवसनान् बाधसे केन हेतुना ॥ ४० ॥

यद् वस्त्वनास्थयाशास्यं पुंसां पूर्वमुपेक्षितम् ।
तदन्विष्टमपि प्रायो नैव तेषां भविष्यति ॥ ४१ ॥

त्वया निद्रालुना पूर्वं जागरूकेण साम्प्रतम् ।
शक्यते किं नवीकर्तुं नयवर्त्म खिलीकृतम् ॥ ४२ ॥

अनिच्छन्तीं स्त्रियं स्प्रष्टुं कामस्पृष्टेन चेतसा ।
ब्रह्मशापोपसृष्टस्य न शक्यं ते दशानन ! ॥ ४३ ॥

शक्रे जितेऽपनीतेऽपि तत्रस्थो भोक्तुमक्षमः ।
भिया तद्गोचरान् भोग्यान् लङ्कायां कृतवानसि ॥ ४४ ॥

भुजैर्वक्त्रैश्च विंशत्या दशभिश्च भयानकात् ।
बिभेतीन्द्रो वृथा त्वत्तो मृगयुः शलभादिव ॥ ४५ ॥

तावत् स्त्रियं शूर्पणखा दुर्दान्ता नः सहोदरी ।
वनस्थं तापसं रामं पतित्वे समकल्पयत् ॥ ४६ ॥

शुभे मुहूर्ते निश्शेषरक्षःकुलविनाशिनि ।
अपथे वर्तमाना सा लक्ष्मणेन विरूपिता ॥ ४७ ॥

खरादीन् रामकोपाग्नौ हुत्वा दुर्धरतेजसि ।
ऋषिप्रयुक्ता कृत्येव साक्षात् त्वामभ्युपागता ॥ ४८ ॥

ततो मारीचमित्रेण भवता रणभीरुणा ।
मृगतां भिक्षुतां चैत्य वञ्चितौ रामलक्ष्मणौ ॥ ४९ ॥

तयोर्व्यपायेऽप्याशङ्क्य सीता नीता विहायसा ।
समस्तरक्षोनाशाय लङ्कायां स्थापिता त्वया ॥ ५० ॥

रामस्तु गृध्रसंवादाद् विदित्वा त्वद्धृतां प्रियाम् ।
कृतार्थीकृतसुग्रीवस्तितीर्षुः सिन्धुमभ्यगात् ॥ ५१ ॥

अनादिमध्यावसितां चारयन् वानरीं चमूम् ।
तीर्त्वा लङ्कोपकण्ठस्थस्त्वया प्रत्युद्व्रजिष्यते ॥ ५२ ॥

तेषामन्यतमस्येह कपेः क्षुद्रस्य विक्रमम् ।
मिषतां नः सयोधानां कच्चिन्निर्विष्टवानसि ॥ ५३ ॥

न परं मानुषो रामो योऽयं कपिकुलानुगः ।
पृथिव्यामुदिता कापि रक्षोघ्नी परदेवता ॥ ५४ ॥

तत् पुलस्त्यं पुरस्कृत्य पितरं कोपशान्तये ।
सीतामक्षयचारित्रां रामायोपहर प्रभो ! ॥ ५५ ॥

इति ब्रुवति भूतार्थं हितं भ्रातरि रावणः ।
उदस्थात् खड्गमुद्यम्य परप्राणान्तकारिणम् ॥ ५६ ॥

ततोऽपसृत्य सद्यः स्वैश्चतुर्भिः सह राक्षसैः ।
स्थितं पयोधिवेलायां रामं प्राप विभीषणः ॥ ५७ ॥

कनीयानस्मि काकुत्स्थ ! रावणस्य बलीयसः ।
हितवादेन निर्धूतस्तेन त्वामहमाश्रितः ॥ ५८ ॥

इति विज्ञापिते तेन मायाबाहुल्यदर्शिभिः ।
कपिभिः शङ्कितं सर्वैः सुग्रीवेण च धीमता ॥ ५९ ॥

कपिभर्तुर्मतं ज्ञात्वा हनूमद्वचसि स्थितः ।
अस्त्विति प्रतिजग्राह रावणावरजं प्रभुः ॥ ६० ॥

दैवादुपनते विन्दे मुहूर्तेऽभिजिता युते ।
रामस्तं राक्षसैश्वर्ये लक्ष्मणेनाभ्यषेचयत् ॥ ६१ ॥

ततः स्वादूनि मूलानि फलानि च वनौकसः ।
रक्षोधिपतये तस्मै कृतार्हणमुपाहरन् ॥ ६२ ॥

तस्य रामाभिषिक्तस्य जाग्रतः सत्यधर्मयोः ।
शाश्वती श्रीरनिर्देश्या वपुः सकलमानशे ॥ ६३ ॥

विभीषणत्वं सुग्रीवः सुग्रीवत्वं विभीषणः ।
अन्वभूदन्वितप्रेम्णोः कपिराक्षसमुख्ययोः ॥ ६४ ॥

ततो भुजगनिर्मोकमृदुक्षौमोत्तरच्छदे ।
नाभिकर्पूरगोशीर्षकुङ्कुमागुरुवासिते ॥ ६५ ॥

उत्तमस्त्रीकराधूतचामरानिलगोचरे ।
धात्रेयीनिपुणाकीर्णसुरभिप्रसवोज्ज्वले ॥ ६६ ॥

तुङ्गोपधानसुभगे सीतासम्बाधमङ्गले ।
शयानः शयने पूर्वं तैस्तैः कामैर्निषेवितः ॥ ६७ ॥

पौरैरुपस्थितः प्रीत्या कौतुकस्तिमितेक्षणैः ।
प्रियङ्करेण सर्वेषां लक्ष्मणेन निवेदितैः ॥ ६८ ॥

सीताविज्ञापितोदन्तः पौरस्त्रीणां निशामुखे ।
निशान्ताजिरभूभागे सङ्गतानां दिदृक्षया ॥ ६९ ॥

तदा तु चीरवसनः फलमूलाशनः कृशः ।
विश्लेषानलनिश्शेषदह्यमानधृतीन्द्रियः ॥ ७० ॥

त्रस्तुभिः कपिभिः सर्वैर्निभृतैरभिवीक्षितः ।
अन्योन्यमुखविन्यस्तलोचनान्तैरनुक्षणम् ॥ ७१ ॥

अभिसन्धाय तरणं वरुणं प्रत्यमर्षितः ।
उपधानं त्रिजगतामुपधाय निजं भुजम् ॥ ७२ ॥

लक्ष्मणेनोपनीतेषु दर्भेषु प्राङ्मुखेषु सः ।
कालरुद्रप्रतीकाशो विशश्राम विशांपतिः ॥ ७३ ॥

वेगोत्पाटितशैलाग्रा रजश्छादितदिङ्मुखाः ।
निर्घातमारुता घोरा जगत् सर्वं व्यलोलयन् ॥ ७४ ॥

सन्ध्याभ्रपिङ्गपर्यन्तो धूम्राभ्यन्तरभीषणः ।
निबबन्ध परीवेषः संरुद्धकिरणं रविम् ॥ ७५ ॥

उद्गीर्णोच्चण्डडात्काराः सृगालाः सूर्यगां दिशम् ।
आश्रित्याश्रित्य विपदं लोकानामभ्यसूचयन् ॥ ७६ ॥

अनात्मनीनगाम्भीर्यं वरुणं प्रत्यमर्षिणा ।
वाचंयमेन देवेन निशास्तिस्रोऽतिवाहिताः ॥ ७७ ॥

तथाभूतं तमालक्ष्य निलीनं व्योमचारिभिः ।
किं भविष्यति लोकानामित्यकाण्डे विशङ्किभिः ॥ ७८ ॥

सविभीषणसुग्रीवं सर्वं कपिबलं तदा ।
निश्शब्दमपरिस्पन्दं चित्रन्यस्तमिवाभवत् ॥ ७९ ॥

अवष्टभ्य धनुः सज्यं दत्तदृष्टिर्हनूमति ।
चिन्तयन् निभृतं तस्थौ सौमित्रिः शत्रुशातनः ॥ ८० ॥

अथोपस्थाय गायत्रीं चापे ब्रह्मास्त्रमन्त्रितम् ।
सायकं सन्दधानस्य दुर्निरीक्षमभूद् वपुः ॥ ८१ ॥

विमुक्तस्तेन बाणाग्निर्ज्वालाभिः स्थगिताम्बरः ।
स्फारफात्कारवाचालः पारावारं व्यगाहत ॥ ८२ ॥

जलमश्नन् हविर्भूतं पयोधेर्बाडवानलः ।
क्षणाद् भस्मीकरिष्यन्तं तमनुप्राविशत् तदा ॥ ८३ ॥

दुर्धरेण प्रभावेन तस्यास्त्रस्योत्पतिष्णुना ।
धातुराधारनालीके पत्रपङ्क्तिरशुष्यत ॥ ८४ ॥

घस्मरेणोष्मणा तस्य तत्र तत्र प्रसर्पिणा ।
सदैवतान्यकम्पन्त भुवनानि चतुर्दश ॥ ८५ ॥

अवगाढः समुद्रान्तःप्रदेशं निर्दहञ्जलम् ।
अवर्धत तडिद्वह्निर्वर्षाम्बुभिरिवाप्लुतः ॥ ८६ ॥

काश्चिज्ज्वालास्वहीन् जघ्नुः काश्चित् प्रास्फोटयन् गिरीन्
काश्चिदालिलिहुर्दैत्यान् काश्चित् सत्त्वान् बबाधिरे ॥ ८७ ॥

अवहिर्गतधूमार्चिष्प्रसरं कुम्भितानिलम् ।
ब्रह्माण्डं पुटपाकस्य प्रक्रियां समपद्यत ॥ ८८ ॥

आलोक्य रामकोपस्य विवर्तं लोकदुर्धरम् ।
तं शरण्यमुपस्थातुमारेभे यादसां पतिः ॥ ८९ ॥

सरिद्भिस्त्रासवश्याभिर्गङ्गादिभिरनुद्रुतः ।
ययौ शोणं पुरस्कृत्य स विभोरन्तिकं प्रति ॥ ९० ॥

येन रामप्रसादार्थी पथा सञ्चरते स्म सः ।
तस्मिन् प्रत्याहृतज्वालः शशाभाञ्चाग्निरुल्बणः ॥ ९१ ॥
तमारादुपतिष्ठन्तं प्रह्वं निध्यायतः प्रभोः ।
वदनेन्दुः प्रसन्नोऽभूत् तथाशीला हि तादृशाः ॥ ९२ ॥
वृतं कपिप्रपञ्चेन ससुग्रीवविभीषणम् ।
उपस्थितं मारुतिना सोऽपश्यल्लक्ष्मणाग्रजम् ॥ ९३ ॥
प्रसीदेद्वा न वा राम इति तर्कज्वरातुरः ।
सान्त्वपूर्वमिति प्रोचे वाचं नदनदीपतिः ॥ ९४ ॥
अध्वराश्वं विचिन्वद्भिस्त्वत्पूर्वैः परिवर्धितः ।
रक्षणीयो विशेषेण सागरोऽस्मि ननु प्रभो! ॥ ९५ ॥
ऋषिशापनिवृत्त्यर्थं तेषां साहसकारिणाम् ।
इयं भागीरथी व्योम्नस्त्वत्प्राच्येनावतारिता ॥ ९६ ॥
त्वद्वंशकर्तुः सवितुः सुतेयं यमुना सती ।
उचितः खलु सम्बन्धो भवतोऽस्यां च मानद! ॥ ९७ ॥
महर्षेर्मेखलस्यैषा तनया नर्मदाभिधा ।
यस्त्वाज्ञया वसिष्ठस्य मान्धातारमयाजयत् ॥ ९८ ॥
एषा गोदावरी यस्यास्तीरे त्वमुषितः पुरा ।
विपदं प्राप्तवानेतां सर्वरक्षोपलापिनीम् ॥ ९९ ॥
अद्भिः पुण्यतमाभिर्या पुनाति भजतो जनान् ।
द्रष्टव्या ते विशेषेण सेयं प्राची सरस्वती ॥ १०० ॥
अन्या महापगाश्चैता भवद्रक्ष्या रघूद्वह!।
रत्नानि चान्तर्गुप्तानि ममाहं च सहानुगः ॥ १०१ ॥
शोणो नदोऽयमस्याम्भः क्वचित् त्वमुपयुक्तवान् ।
कौशिकक्रतुरक्षार्थं गच्छन्मार्गे सलक्ष्मणः ॥ १०२ ॥
अमुष्य तरतो वेगाद् विश्रमाय हनूमतः ।
मैनाकः प्रेषितः शैलस्त्वत्प्रसादार्थिना मया ॥ १०३ ॥
अप्यहं जलधी राम! संसक्तः सुखकर्मसु ।
मदप्रमादोपचितो न जाने त्वां तथाविधम् ॥ १०४ ॥

वयमल्पे भवन्मन्योर्विषयत्वेन वर्तितुम् ।
शिरीषकुसुमं नेष्टे पदं सोढुं गरुत्मतः ॥ १०५ ॥

तदिहाज्ञापयास्माभिराश्रवैः किं करिष्यते ।
महीयानेष सन्नाहः प्रस्तौतु जगतां शिवम् ॥ १०६॥

वशंवदस्य तस्येति विरामे वचसां प्रभुः ।
तं प्रत्यपगतामर्षो भारतीमुद्भावयत् ॥ १०७ ॥

त्वरमाणस्य सङ्ग्रामे रावणोपप्लवं प्रति ।
प्रत्याहरिष्यतः सीतां मार्गं मे दातुमर्हसि ॥ १०८ ॥

एभिः कपिभिरानीतैः शैलौघैः सहकाननैः ।
तरीतुमप्रयासेन सेतुं विरचयाम्यहम् ॥ १०९ ॥

इत्थं रामोदितं श्रुत्वा तमाराध्य तथास्त्विति ।
सहापगाभिः सर्वाभिस्तिरोभूदम्भसां निधिः ॥ ११० ॥

आनाय्य महतः शैलान् सगुल्मानप्य(नौ ? नो)कहान् ।
सन्धिबन्धं दृढीकृत्य सेतुं कारय वानरैः ॥ १११ ॥

कुशलं तासु विद्यासु विश्वकर्मसुतं नलम् ।
प्रवृत्त्यनवसादार्थं त्वमध्यक्षय मा चिरम् ॥ ११२ ॥

उपदिष्टां हनुमता दिशमुद्दिश्य धीमता ।
बधान सेतुं सुग्रीव! यस्य लङ्कावधीयते ॥ ११३ ॥

विस्तारायामयोः सीमा दशकेन शतेन च ।
अस्याशीतिसहस्रेण योजनानां तलग्रहः ॥ ११४॥

अधिष्ठानपरीणाहस्तत्त्रिभागेन कल्प्यताम् ।
पक्षयोरन्यथा सेतुः क्षणाद् वायुन्नतः क्षरेत् ॥ ११५ ॥

अल्पसाराणि दारूणि नाथः कार्याणि वारिणि ।
परिहार्या स्थपुटता सा सञ्चारनिरोधिनी ॥ ११६ ॥

सुश्लेष्यः पार्श्वयोर्ग्रन्थिस्तरङ्गाघातखेद्ययोः ।
महद्भिर्गिरिभिः साग्रैर्गण्डशैलैश्च सोपलैः ॥ ११७ ॥

---

१. 'श्च' क. पाठः.

अन्तरेष्वन्तरेष्वत्र प्रत्यवेक्ष्यावपूर्यताम् ।
विषयानुगुणैर्द्रव्यैरुपस्नेहानिवृत्तये ॥ ११८ ॥

विभज्य यूथनाथेषु प्रदेशानुपपाद्य ।
नलस्यानुमतेनैतत् सर्वं सम्पाद्यतां त्वया ॥ ११९ ॥

मा भूज्जनपदग्रामपुरराष्ट्रादिविप्लवः ।
उद्वहद्भिर्गिरींस्तुङ्गांस्त्वरमाणैः प्लवङ्गमैः ॥ १२० ॥

केषुचिद् गिरिशृङ्गेषु काननेषु च तापसाः ।
तपस्येयुः प्रदेशांस्तान् दूरात् परिहरन्त्वमी ॥ १२१ ॥

इत्यादिष्टो हरिश्रेष्ठः काकुत्स्थेन मनस्विना ।
प्लवङ्गांस्त्वरयामास नलमामन्त्र्य सेतवे ॥ १२२ ॥

कृतसूत्रार्पणाः केचिदृजुदृष्टिकृतः परे ।
केचन स्थलसाम्याय वितानं समगृह्णत ॥ १२३ ॥

उत्पाटितान् दिगन्तेभ्यः शैलानम्बरचुम्बिनः ।
अपातयन्ननायस्ता गम्भीरे सागराम्भसि ॥ १२४ ॥

ते शैलपातसम्भूतान् फेनानालोक्य वारिणि ।
मृद्यमानसमुद्रास्थिशकलानीति मेनिरे ॥ १२५ ॥

उत्पाटिताद्रिकुञ्जान्तर्वासतव्या वनदेवताः ।
भयेन विरता गीतादुदपप्तन् विहायसि ॥ १२६ ॥

अद्रयः प्लवगैरूढास्तत्पूर्वविदितव्यथान् ।
प्लुतैः पारिप्लवाः सिंहान् वमन्ति स्म गुहामुखैः ॥ १२७ ॥

इतरोद्धृतशैलाग्रच्यावितैर्निर्झराम्बुभिः ।
एते निर्वाप्य दावाग्निं गिरिस्थं तानुदावहन् ॥ १२८ ॥

दूरादापततां भारं केषांचिद् वीक्ष्य केचन ।
अर्धमार्गे समाश्वास्य प्रत्यगृह्णन् निनीषवः ॥ १२९ ॥

क्षिप्त्वा नलानुसारेण तान् गिरीनथ सत्वराः ।
प्रतिजग्मुर्महोत्साहाः प्रत्यगं प्रतिकाननम् ॥ १३० ॥

राक्षसा वयमित्येके परे स्मः प्लवगा इति ।
विभज्य स्वान् द्विधा चक्रुर्नियुद्धं यान्त एव ते ॥ १३१ ॥

केचिदारुरुहुः स्कन्धान् केषांचित् पातिताश्च ते ।
पुनः कृतकसंरम्भा मिथो युद्धं वितेनिरे ॥ १३२ ॥

दिव्यौषधिमहिम्ना ते क्षुत्पिपासापराङ्मुखाः ।
अहोभिः पञ्चभिः सेतुं सुवेलावधि चक्रिरे ॥ १३३ ॥

येन दुर्गेण महता दर्पमेति दशाननः ।
स विभोराज्ञया बद्धः सिन्धुराजः प्लवङ्गमैः ॥ १३४ ॥

सफेनबुद्बुदः सिन्धुर्विभक्तो नलसेतुना ।
सीमन्तित इवाकाशश्छायामार्गेण सग्रहः ॥ १३५ ॥

कुक्षिपार्श्वापरान्तेषु तस्य सैन्यस्य यूथपान् ।
कृत्वा हनुमतः स्कन्धमारूढोऽग्रेऽभवत् प्रभुः ॥ १३६ ॥

अशोभतोढः सौमित्रिर्बलिना बालिसूनुना ।
अन्वितः कपिराजेन पुलस्त्यतनयेन च ॥ १३७ ॥

तीर्णं तरत् तरिष्यच्च दिग्भ्यश्चागामि तद्बलम् ।
निरीक्ष्य विस्मयस्मेरा बभूवुर्नाकवासिनः ॥ १३८ ॥

क्षणादुल्लङ्घ्योच्चैरनितरसुलङ्घं जलनिधिं
सुवेलस्थस्तस्मिन् प्लवगपृतनां व्यूह्य निबिडम् ।
सपौलस्त्यं कृत्वा कपिकुलपतिं प्राक्पदगतं
ससौमित्रिस्तस्थौ विभुरनुपमारम्भनिरतः ॥ १३९ ॥

इति रघुवीरचरिते चतुर्दशः सर्गः ।

---

## अथ पञ्चदशः सर्गः ।

अथ भुवनगृहीतशासनेन प्लवगबलं प्रभविष्णुना प्रणीतम् ।
बलवदनिलवेगमेदुरोर्मिप्रलयपयोनिधितुल्यकल्यमासीत् ॥ १ ॥

दशवदनपुरीं निरीक्षमाणा विपिनसरित्परिखाद्रिवप्रदुर्गाम् ।
करकवलितगण्डशैलसाला सकिलिकिलिध्वनि चुक्रुशुस्ततस्ते ॥ २ ॥

दरविवृतमुखं निरीक्ष्य योधानुपरिकृतश्रुतिदर्शितापरान्ताः ।
अनतिनिकटमास्थिताः प्रदेशं करचालितैर्निरराजयन् स्ववालैः ॥ ३ ॥

स्तिमितनयनमुन्नृतोर्ध्वकायाः शिथिलितवालधिविश्लथाग्रहस्ताः ।
कपिषु कतिपये मुहुर्विपक्षं चलनिटिलभ्रु विलोकयांबभूवुः ॥ ४ ॥

चटुलकुटिल(को ? कू)र्पराग्रहस्तद्रुतपरिघट्टितकण्डुकूणिताक्षम् ।
बधिरितदशकण्ठकर्णरन्ध्रं प्रकटितहुङ्कृति पुप्लुवे प्लवङ्गैः ॥ ५ ॥

निजभुजबलकृत्तनन्दनानां निकृतिनिमग्नधियां निशाचराणाम् ।
भवनपरिसरास्तदा बभूवुः कतिपयमर्कटभग्ननिष्कुटान्ताः ॥ ६ ॥

समदकपिबलप्रमथ्यमानद्रुमविटपध्वनिरुच्चकैरुदञ्चन् ।
पुरपरिभवपौनरुक्त्यशंसी दशवदनश्रुतिविंशतिं विवेश ॥ ७ ॥

करतलनिहतः कपिप्रवीरैरधरितसिन्धुरवैस्त्रिकूटशैलः ।
घनसमयसमीरसन्निपातद्रुतचलितद्रुमचापलं चकम्पे ॥ ८ ॥

कपिनिवहविधूयमानशैलप्रतिजनितोर्मिनिवारितस्ववीचिः ।
भयविवशविवर्तसत्वराशिर्जलनिधिराकुलतां क्षणादवाप ॥ ९ ॥

निशिचरकुलधारणक्षमोऽपि प्लवगबलेन गिरिर्दृढाधिरूढः ।
अजनि कतिपयाङ्गुलावगाढः पुनरपि पाथसि वारिधेस्तदानीम् ॥

सरभसमधिरुह्य सालमुच्चैः कपिबलसागरमागतं विलोक्य ।
चलितधृति समेत्य राक्षसेन्द्रं कतिपयकौणपजाङ्घिकाः शशंसुः ॥

रघुकुलतिलकप्रतापवह्नौ महति जुहोति विधिः पलाशजातम् ।
विरमतु तव वीर! चन्द्रहासः प्रभवति किं नु पुलस्त्यपुण्यभूमा ॥१२॥

इति चरगदितं निशम्य कोपाद् भृशमुपरक्ततनुः स्वयूथनाथान् ।
त्रिभुवनविजयप्रगल्भवीर्यान् रजनिचराधिपतिर्न्ययुङ्क्त योद्धुम् ॥ १३ ॥

अथ कटुरटितप्रवाहवेगस्फुटितदिगन्तमरुत्पथान्तरालम् ।
प्रलयसमयजृम्भमाणमेघस्फुरिततडिद्गणखण्डभीमदंष्ट्रम् ॥ १४ ॥

---

१ 'धिगत', २. 'न' क. पाठः.

भविगणितनिरन्तराभिषिक्तप्रणयकुमारवधूजनानुयात्रम् ।
अहमहमिकया निरन्तराभिक्रमणपरस्परबाहितोग्रशङ्खम् ॥ १५ ॥

रथगजहयरुद्धगोपुरत्वात् असभविलङ्घितनुङ्गहेमसालम् ।
असुरसुरजयातिरूढदर्पं झटिति निशाचरसैन्यमाविरासीत् ॥ १६ ॥

न खलु किमपि वीर्यमग्रतो नः प्रतिभटतामुपलीढलाभमीषाम् ।
इति मनसि परस्परं बभूव प्लवगनिशाचरसैनयोरमर्षः ॥ १७ ॥

तदनु हरिषु कैश्चिदुत्प्लुतेन द्विरदबलान्यभिपत्य तत्स्थयोधान् ।
करतलपरिपीडितान् निपात्य द्रुतमुदपाद्यत तद्विपाणजातम् ॥ १८ ॥

कतिचिदिभकुलं प्रपद्य नीचैश्चरणचतुष्टयपुच्छपुष्कराग्रम् ।
सपरिकरमबाग् विधाय तेषां प्रकटितविक्रममोटयन्त कर्णान् ॥ १९ ॥

भटकृतसरयोद्धुताग्रहस्तप्रविचलितं मुसलं गजात् प्रगृह्य ।
कपिरमुममुनैव मूर्ध्नि हत्वा पुनरितरं च विपोथयाञ्चकार ॥ २० ॥

अचलनिभमिभं समेत्य नीचैः कपिरपरः पदपञ्जरे निलीय ।
चपलमभिमृशन्तमग्रहस्तं दृढमभिवेष्ट्य लुलुपुराचकर्ष ॥ २१ ॥

कतिचिदुपचितोग्रविक्रमश्वान् करतलपातितसादिनः प्रगृह्य ।
गलभुवि समराध्वरे वितीर्णात्रिदिवपथे शमितृत्वमभ्युपेयुः ॥ २२ ॥

विहितसकलहेतिषु प्लवङ्गा गिरिशिखराणि रथेषु पातयन्तः ।
द्रुततरमपमृद्य तान् सनाथानरिभयदाः कुरुतं क्रुधा निवव्रुः ॥ २३ ॥

तस्मिन् काले कालनाभस्य सूनुर्विद्युज्जिह्वः कोऽपि मारीचशिष्यः ।
सम्मोहार्थं सर्वशाखामृगाणां मायाबन्धुर्भावयामास मायाम् ॥ २४ ॥

भिन्ना द्वेधा गर्जितैरूर्जितैर्द्यौर्भेजे दौस्थ्यं वेपमाना धरित्री ।
धूमोद्गारैरावृतं विश्वमभ्रादासीज्ज्वालाभीममङ्गारवृष्टिः ॥ २५ ॥

रक्ताक्ताङ्ग्यः स्पष्टदंष्ट्राट्टहासा भीमं रूपं यातुधान्यो दधानाः ।
निर्मुण्डिन्यः सङ्गता व्योमरङ्गे नृत्तं चक्रुर्दिग्दुकूलं वसानाः ॥ २६ ॥

कृत्वा मायावैभवेनारविन्दश्रीमद्वक्त्रं रामचन्द्रोत्तमाङ्गम् ।
गत्वा देव्यै दर्शयित्वा व्यधात् तां प्रागेवार्तां साहसाय प्रवृत्ताम् ॥

एषा माया देवि! कापि त्यजैनां देहत्यागायोद्यतां चित्तवृत्तिम् ।
बाणज्वालो नैर्ऋतारण्यवह्निः सत्यं देवो युध्यते त्वां निनीषुः ॥ २८ ॥

मौर्वीनादः श्रूयते घोरघोपश्चापाकृष्टिं कुर्वतोर्दाशरथ्योः ।
भीमा हिक्काः स्वं जयं व्यञ्जयन्तीर्भिन्दाना द्यामुद्गिरन्ति प्लवङ्गाः ॥

अप्रागल्भ्याद् राक्षसा न क्षमन्ते दृष्ट्वा शत्रूनञ्जसाभिक्रमाय ।
सर्वासां नः पश्य वक्त्राणि भामिन्या(वि?धि)म्लानान्यश्रुगर्भेक्षणानि ॥

किञ्चान्यच्च स्नेहहेतोः प्रवक्ष्ये सत्त्वध्वंसी मा स्म भूत् कोऽपि शोकः ।
यस्ते भर्ता तद्विरोधं विधातुं देवीं स्मर्तुं चात्मभूरप्यकल्यः ॥ ३१ ॥

तुभ्यं देवि! स्वास्ति भूयाद् व्यवस्यन् युद्धोत्साहान्मा विरंसीच्च रामः ।
इत्थं वाचा जीवयामास सीतां काचित् प्रेम्णा सङ्गता यातुधानी ॥

पौलस्त्यस्य स्वाभिषिक्तस्य वाचा ज्ञात्वा मायां विक्रवां प्रेयसीं स्वाम् ।
रोषाद् बभ्रुर्निर्धुतैधानलाभो रक्षोरण्ये प्राज्वलद् भूरि रामः ॥ ३३ ॥

एवं युद्धे वर्तमाने कपीनां यातूनां च स्फीतसंरम्भभाजाम् ।
प्रासादाग्रं तुङ्गमारुह्य वेगादीक्षांचक्रे रावणः प्रत्यनीकम् ॥ ३४ ॥

प्राप्योपान्तं वानराणां प्रभा(वं?वो) वासस्थानं नामधेयानि चैषाम् ।
जातिव्यासो नैकधा विप्रकीर्णो भर्त्रे सर्वं सारणेनाभ्यधायि ॥ ३५ ॥

ये ये योधाः साम्पराये परेतास्तानाकृष्य प्राक्षिपन्नब्धिकुक्षौ ।
रक्षोभर्तुः शासनेनाभियुक्ता बद्ध्वा पाशैः किङ्कराः प्राणसाराः ॥ ३६ ॥

रुद्धा लङ्का वानराणां महौघैर्यावत् तावद् दर्शितस्वानुभावः ।
आच्छोट्य स्वं बालधिं वालिकल्पः स्वैः प्राणैरप्युद्यतः साहसाय ॥

प्रासादस्थे दृश्यमाने दशास्ये रामोपान्तादुत्प्लुतः सन्निपत्य ।
विक्रम्योच्चैस्तस्य मौलिं गृहीत्वा सुग्रीवस्तं प्रादिशद् राघवाय ॥

दृष्ट्वा भर्तुस्तादृशं विप्रकारं सुग्रीवोत्थं प्रीतिकृत् खेचराणाम् ।
दिङ्नागानां कर्णरन्ध्रं निरुन्धन् हाहाकारो रक्षसां प्रादुरासीत् ॥

---

१. 'सं', २. 'र्णं' ख. पा०.

गोलाङ्गूलैर्वानरैरच्छभल्लैर्ऋक्षैश्चान्यैर्जातिभिन्नैश्च विद्धाः ।
सालैस्तालैर्मुष्टिभिश्चाद्रिशृङ्गैर्दन्तैश्चोग्रैः कोटिशो यातुधानाः ॥ ४० ॥

उत्ताराक्षिश्मश्रुदंष्ट्राकरालैर्व्यात्तैर्वक्त्रैरन्तरिक्षं पिबन्तः ।
घोराकारा वानरा यातुधानान् ग्राहं ग्राहं भक्षयामासुरुग्रम् ॥ ४१ ॥

एवं युद्धे दारुणे वर्तमाने भानावस्तं मन्दभानौ च याते ।
आसीद् रक्षोवानरप्राणहन्त्री रात्रिः साक्षात् कालरात्रिप्रभावा ॥४२॥

अस्पष्टाब्धिस्थावरप्राणिभेदः सेनोद्भूतैः पांसुभिश्छन्नतारः ।
रोद्धा रक्षश्चक्षुषामप्यशेषं विश्वं व्याप्नोदन्धकारावतारः ॥ ४३ ॥

आन्त्रस्रग्भिर्भूषितोरःप्रदेशैर्व्योम्न्युन्नम्रैर्ऋक्षरक्षःकबन्धैः ।
दृग्भ्रूलीलागीतशून्याङ्गहारैर्नृत्तं चक्रे बद्धतालं कपालैः ॥ ४४ ॥

वेगोद्रिक्ता रामपौलस्त्यसेनादेहोद्भूता भूरिरक्तस्रवन्त्यः ।
वातोदञ्चद्वीचिवाचालकूला भित्त्वा वेलामाविशन्नम्बुराशिम् ॥ ४५ ॥

इति विप्रकृतं प्लवङ्गभर्त्रा पितरं वीक्ष्य मिषत्सु वानरेषु ।
विधिदत्तवरोर्जितप्रभावः परमं शक्रजिदाजहार कोपम् ॥ ४६ ॥

अपि नर्मणि यद्भ्रुवोर्विलासः सुरदैतेयकुलेषु भीतिमाधात् ।
प्रसितां प्रलयेन कालरात्रिं यदपास्तः स्म धनुर्ध्वनिर्धिनोति ॥ ४७ ॥

स समस्तकपिक्षपाचराणां हृदयेषु व्यथितत्वमादधानः ।
शतमन्युजयातिरूढदर्पः पृथुमायः प्रथयाञ्चकार मायाम् ॥ ४८ ॥

नभसः पतति स्म सास्थिमांसा महती शोणितवृष्टिरुग्रगन्धा ।
समलक्ष्यत दिग्वधूमुखेषु क्रमवृद्धिं प्रथयन् रजोविकारः ॥ ४९ ॥

इति कूटपटुः प्रयुज्य मायामपदानैः पितरं च लङ्घयिष्यन् ।
अतिदुस्तरसङ्कटप्रयोज्यं स्मरति स्म द्रुहिणप्रतीतमस्त्रम् ॥ ५० ॥

अथ दाशरथौ निरुध्यमाने भुजगास्त्रेण सहानुजे निरीहे ।
जवधूतकुलाचलाब्धिभूमिः प्रववौ वायुरुदीरयन् रजांसि ॥ ५१ ॥

---

१. 'श्रु' ग. पाठः.

तदनन्तरमम्बरायकायादवतीर्णः कनकोत्तमावदातः ।
परिहर्तुमनास्तयोर्विपत्तिं कुपितस्तत्र बभूव वैनतेयः ॥ ५२ ॥

धृतचित्रमरीचिभिः परार्घ्यैर्मणिभिर्मुद्रितमुद्वहन् किरीटम् ।
शिखराग्रविलग्नविश्वतेजाः प्रथमानप्रथिमेव हेमशैलः ॥ ५३ ॥

भ्रुकुटीमहिसंशकालरात्रिं कुटिलभ्रूयुगलीसमुत्कृतेन ।
निटिलेन वहन्नुदग्रनेत्रस्फुटनिष्ठ्यूतकृशानुदुर्निरीक्षः ॥ ५४ ॥

धृतकुण्डलभोगियोगरत्नस्फुरदर्चिःप्रसरैः स्वमश्नुवानः ।
फणिशोणितदिग्धचञ्चुतुण्डद्वयसङ्कुलशब्दपूरिताशः ॥ ५५ ॥

निजदैवतरत्नकौस्तुभस्य श्रुतिशारीकृतनाककण्ठदेशः ।
उरसा भृगु[illegible]पङ्कजानुयातः ॥ ५६ ॥

भुवनोद्धरणक्रियाप्रगल्भं भुजदण्डद्वयमायतं दधानः ।
अवलिप्तकराङ्गुलिः करालैररिनिर्दारणलम्पटैर्नखाग्रैः ॥ ५७ ॥

समवृत्तघनोरुजानुजङ्घारभसोत्सारितयानखिन्नरौघः ।
त्वरितानुनिबध्यमानयात्रापवनावर्तवशभ्रमन्महीध्रः ॥ ५८ ॥

महसः परमस्य सन्निधानान्निहितस्कन्धनदीनिरूढगर्वः ।
वलयाङ्गदकङ्कणादिभूषारचनामप्रमहोरगैर्वितन्वन् ॥ ५९ ॥

स्थगिताम्बरकुक्षिपक्षहेलामरुदान्दोलितहेमहेमशैलः ।
चरणार्पणविह्वलभूतधात्रीदृढनिष्पीडितकर्परादिकूर्मः ॥ ६० ॥

इति सन्निहिते रघुप्रवीरस्थितये काश्यपधर्मदारभाग्ये ।
विधिशृङ्खलितं महोरगास्त्रं व्यगलत् पूष्णि तमः समुन्नतीव ॥ ६१ ॥

अमृताकृतिरामृशत् कराभ्यां हरिपादाब्जरजःपवित्रिताभ्याम् ।
सकलात्मतया विजज्ञिवांसौ विरुजौ विश्वरुजापहौ चकार ॥ ६२ ॥

रणतः सहसा गते विरामं पृतने ते मिलिते परस्परेण ।
अवशं कमपि च्युतात्महेती बुबुधाते न गरुत्मदस्त्रविद्धे ॥ ६३ ॥

---

१. 'चारुप' क. पाठः.

प्रकृतिं प्रतिजग्मिवान् पुनः स्वां प्रभविष्णुः प्रभवे विहङ्गमानाम् ।
क इवासि विवित्सुरस्य हेतोरिति पृष्टः स्वेत्थमुदाहरत् स वाचम् ॥

इह सङ्गरसङ्कटे न चासे पुनरभ्येत्य यथातथं प्रवक्ष्ये ।
नचिरेण करिष्यते भवद्भ्यां युधि रक्षस्तु विभीषणोऽवशिष्टः ॥ ६५ ॥

अतिरूढकृतान्तदूषितायुर्दशकण्ठस्तव धर्मदारहर्ता ।
सकलं स्वकुलं विनाश्य मन्दो दुरितानां महतां फलानि गन्ता ॥ ६६ ॥

त्रिजगत्प्रथितापदान ! तुभ्यं भवतु स्वस्ति सहानुजानुगाय ।
गिरमित्थमुदीर्य तं गरुत्मान् नभसा क्षिप्रमविक्षताङ्गमारित्सत् ॥ ६७ ॥

इति ताक्ष्यनिराकृते निजास्त्रे घनमुक्तार्क इवोत्थिते च देवे ।
पुनरप्यधिकं पराभविष्यन् विधिना कथञ्चिदिन्द्रजित् तिरोऽभूत् ॥ ६८ ॥

कपिलोकपितामहेन दिक्षुः स्फुटिताशागजकर्णशङ्खभागाः ।
सृजता बहु निश्चलारिसैन्यं न तदा सार्थकमल्पमप्यकारि ॥ ६९ ॥

अवमृद्य वरूथिनीमनेकां निपतामेव महौजसां रिपूणाम् ।
दशकण्ठबलाधिपः प्रहस्तो युधि नीलेन कथीकृतो बभूव ॥ ७० ॥

पवनात्मजवालिसूनुमुख्यैर्हरिभिः स्वां पृतनां निशम्य भग्नाम् ।
अतिरूढमदावलेपरोषो दशकण्ठः स्वयमापपात योद्धुम् ॥ ७१ ॥

अथ लक्ष्मणवानरेन्द्रनीलाः समरे तेन निपातिताः क्षणेन ।
महिमानमुपाश्रिताः पुनः स्वं प्रतिजघ्नुः पुनरेनमाश्वसन्तः ॥ ७२ ॥

हिमवच्छिखरस्थकालमेघप्रतिमे विद्विषि दृष्टिगम्यमात्रे ।
अरुणेक्षणवान्तरोषपोषो हनुमत्स्कन्धगतो बभूव देवः ॥ ७३ ॥

स्वबलेन जयेऽपि जागरूके कपिसैन्ये च विहस्ततां विमूढे ।
सहसा रघुराजि दृश्यमाने हृदयं रात्रिचरेशितुश्चकम्पे ॥ ७४ ॥

प्रमुखोपनते विभौ समन्यौ विधिना निष्प्रतिघेन लङ्घितायुः ।
पशुरास स यूपबन्धनेन प्रतिपन्नार्तिरुपाकृतः क्षणेन ॥ ७५ ॥

चिरसम्भृतवैरपावकार्चिष्प्रसरेण ज्वलितौ परस्परेण ।
युधि गन्धगजाविवाविपक्षौ जघटाते स्वरजित्क्षपाचरेन्द्रौ ॥ ७६ ॥

बहुबाहुदशाननप्रयुक्ता शरवृष्टिः प्रभुणा भुजद्वयेन ।
सशरासनसायकेन रुद्धा पटिमा चेत् करणेषु नातिकाङ्क्षा ॥ ७७ ॥

असृजत् स तमः प्रकाशविद्यां त्रिपुरघ्नज्वलनं निशाचरेन्द्रः ।
जलदैवतमीश्वरो रघूणामिति भूयानभवत् तयोर्विरोधः ॥ ७८ ॥

अथ रामशरैर्निकृत्तशस्त्रप्रकरो भग्नरथो विभिन्नगात्रः ।
अपसृत्य ततः पदातिरन्तःपुरमस्तोत्सवमन्थरं विवेश ॥ ७९ ॥

स चिराधिगतप्रसुप्तिमभ्रंकषवेश्मोदरशायिनं निरीहम् ।
अरिपक्षजयाय कुम्भकर्णं द्रुतमुद्बोधयितुं प्रचक्रमे सः ॥ ८० ॥

अयुतं बलिनां निशाचराणां प्रविशद् भर्तृमतेन सुप्तिशालाम् ।
अमितंपचकुम्भकर्णनासाश्वसनाध्वानमपारयन्न गन्तुम् ॥ ८१ ॥

अपरान्तपथेन ते प्रविष्टा युगपत् तूर्यमृदङ्गगोमुखादीन् ।
हिमशैलगुहाभयोर्निधाय श्रवसोः शब्दमुदीरयांबभूवुः ॥ ८२ ॥

बुबुधे विबुधारिणा न तेषामकृशैः कर्मभिरप्युपद्रुतेन ।
अथ तस्य महत्तमे शरीरे चतुरङ्गां पृतनामचारयंस्ते ॥ ८३ ॥

प्रतिबुध्य समुत्थितस्ततस्तां निजदेहप्रसृतां विधूय सेनाम् ।
धृतहेति विलङ्घ्य सालमुच्चैर्निजमात्मानमदर्शयत् कपीनाम् ॥ ८४ ॥

तमभिक्रममाचरन्तमभ्रं निगिरन्तं भिदुरभ्रुणा मुखेन ।
अभिलक्ष्य बलं प्लवङ्गमानां क्षणमापद्यत चापलं भयेन ॥ ८५ ॥

परिगृह्य वलीमुखा भुजाभ्यां मुखपातालविलं प्रवेशिता ये ।
गणशः प्रसभं निरीयुरस्य श्रुतिनासाविवरैर्विदूरपाताः ॥ ८६ ॥

अविलोचनमेयवर्ष्म भूतं किमिदं भीममितोमुखं समेति ।
इति मारुतिरीश्वरेण पृष्टः कथयामास दशाननानुजं तम् ॥ ८७॥

विषहेत क एव तं त्रिलोक्यां यदि निद्रापरतन्त्रता न चेयम् ।
धृतभीषणशूलमुद्वहन्तं हतदक्षाध्वरवीरभद्रमुद्राम् ॥ ८८ ॥

स वलीमुखवाहिनीमनेकां युधि विद्राव्य विदारयन् शरौघैः ।
चरणार्पणपीडितत्रिकूटः शलभो वह्निमिवापपात रामम् ॥ ८९ ॥

तमधःकृतवारणापदानं प्रभविष्णुर्भुवनावनाय सज्जः।
प्रलयानलदुर्धरैः शरौघैः प्रतिजग्राह कपीन् प्रतिष्किरन्तम् ॥ ९० ॥

समरे समतामुभावुपेत्य क्षणमुद्द्योतितभूरिविक्रमेण।
रघुराजसुतेन कुम्भकर्णस्तरसालङ्घ्यत बाणसंहृतायुः ॥ ९१ ॥

इति दशाननसहोदरविलोपकलुषे
सकलराक्षसकुले कपिगणे च मुदिते।
प्रचुरहर्षममरास्तदनु दाशरथये
जयगिरा मुहुरकुर्वत समर्चनविधिम् ॥ ९२ ॥

इति रघुवीरचरिते पञ्चदशः सर्गः।

---

## अथ षोडशः सर्गः।

अथ दाशरथेर्जेतुः सानुजस्य मुखद्युतिः।
जगदाप्याययामास [1]ग्लपयामास चाहितान् ॥ १ ॥

भ्रातृव्यसनतप्तेन दशग्रीवेण चोदिताः।
संशप्तका इवापेतुरतिकायादयः प्रभुम् ॥ २ ॥

हनूमन्नीलतारेयपितामहनलोत्तरैः।
वानरैरपि विद्धास्ते जग्मुः स्वापं महत्तमम् ॥ ३ ॥

अशीतिकोटिसंख्यातैर्बलैनैरावतोपमैः।
किंकरैराज्ञया भर्तुः कृष्टास्ते सागरे कृताः ॥ ४ ॥

वनौकसः क्वचित् क्षीणाः क्वचिद् भग्ना निशाचराः।
त्यक्तशस्त्रादयः क्रोधान्नियुद्धं केचिदाचरन् ॥ ५ ॥

विशीर्णसर्वकायास्थीन्युग्रनिष्पेषमुष्टिभिः।
कोष्ठान्तःकृतबाहूरुपदानि कपिरक्षसाम् ॥ ६ ॥

उद्भ्रान्तजिह्वानयनैर्निमग्नानि शिरोमुखैः।
व्यसूनि देहपिण्डानि कुसूलानीव रेजिरे ॥ ७ ॥

लुलुवुर्वानरान् कांश्चिच्छस्त्रैर्यातूनि कानिचित्।
तान्यन्ये पर्वताकाराः पर्वताग्रैरचूर्णयन् ॥ ८ ॥

---

१. 'सदया' ख. पाठः.

विभीषणः स्ववीर्येण रामं विस्मापयन् रणे ।
रावणानीकयोधानां पञ्चकोटीरचूचुरत् ॥ ९ ॥

ततो रामप्रतापाग्नौ हूयमानाः सुवर्चसि ।
पञ्चाशत्समिधः पश्यन् सहते स्म न रावणिः ॥ १० ॥

हुत्वा तदुचितं हव्यं दक्षिणाग्नौ स दीक्षितः ।
रुषा यक्ष्यन्निवैक्ष्वाकानारुरोह रथोत्तमम् ॥ ११ ॥

दूरादेवापतन्तं तमभिचारमिवाङ्गिनम् ।
निरीक्ष्य वानरी सेना दुद्राव कृतचीत्कृतिः ॥ १२ ॥

जाम्बवन्नीलतारेयपवनाङ्गिगजादिभिः ।
गुप्तामपि स तां सेनां निर्ददाहाग्निरञ्जसा ॥ १३ ॥

स्वार्थे कृतप्रयत्नानामनेकेषां वनौकसाम् ।
पश्यन्नत्याहितं रामः प्रतिजग्राह रावणिम् ॥ १४ ॥

परस्परप्रयुक्तास्त्रैर्द्योतितोभयपक्षकम् ।
अवर्धत तयोर्युद्धमन्योन्यजयकाङ्क्षिणोः ॥ १५ ॥

मेघनादास्त्रनिर्दग्धां कपिसेनामजीवयत् ।
रामदूतः समानीतद्रोणौषधिपर्वतः ॥ १६ ॥

प्रत्यापन्नतनुप्राणा महोत्साहा वनौकसः ।
शश्वत् प्रस्थापयामासुर्नक्तंचरवरूथिनीम् ॥ १७ ॥

स्वबलक्षयमालक्ष्य कृत्याशालां निकुम्भिलाम् ।
प्रविश्य होष्यतः कार्यं विघ्नं मेने विभीषणात् ॥ १८ ॥

निघ्नन् क्रियान्तरायेण दिष्टकुण्डलितायुषम् ।
रणायाह्वास्त सौमित्रिस्तं वृत्रमिव वासवः ॥ १९ ॥

मायापरायणाभिज्ञं साह्ये कृत्वा विभीषणम् ।
अवस्थितः स ददृशे चण्डं शक्रजिता पुरः ॥ २० ॥

---

१. 'रः ॥ पश्य' क. ख. पाठः.

तूर्णमायाहि मा याहि माया हि तव मोहिनी।
कपीनामिति सौमित्रेर्वचस्तं समधुक्षयत् ॥ २१ ॥

पश्यन् रामपरीवारविपर्यस्तां स्ववाहिनीम्।
भुवनैधः प्रजज्वाल कालाग्निरिव रावणिः ॥ २२ ॥

शल्याभिषङ्गजडतामोचितौ रघुनन्दनौ।
सहस्रगुणमुत्साहं चक्राते रक्षसां वधे ॥ २३ ॥

महान्ति पञ्च भूतानि स्वां स्वां प्रकृतिमत्यजन्।
अभिक्रामति सौमित्रिं प्रति तस्मिन् रुषोद्धुते ॥ २४ ॥

विरिञ्चकौशिकोपज्ञैरस्त्रैः सर्वङ्कषैरुभौ।
व्याकुलीचक्रतुश्चित्तं रामरावणयोरपि ॥ २५ ॥

मेघनादप्रयुक्तेषुरस्त्रं पावकदैवतम्।
उज्जगार स्फुरज्ज्वालाकवलीकृतदिङ्मुखम् ॥ २६ ॥

अन्यथाकृतसंन्यस्तजगतस्तपसां निधेः।
कृशाश्वशिष्यात् सौमित्रिरस्त्रागममथास्मरत् ॥ २७ ॥

रामावरजबाणाग्रादुद्गता कापि देवता।
पपौ तीव्रं तमस्त्राग्निं तत्रैव च तिरोदधे ॥ २८ ॥

अस्त्रं ब्रह्मशिरः क्षिप्तं पौलस्त्यतनयेन तत्।
तेनैव सञ्जहारोच्चैः सौमित्रिर्मन्त्रकल्पवित् ॥ २९ ॥

भूयोऽप्यस्त्राणि दिव्यानि समरेष्वविषादिनौ।
भुवनक्षोभकारीणि प्रायुञ्जातां परस्परम् ॥ ३० ॥

क्षणमन्तर्हितः कृत्वा मायासीतां प्रलापिनीम्।
अशोचयत् स काकुत्स्थौ सुग्रीवं च ससैनिकम् ॥ ३१ ॥

हनूमज्जाम्बवत्प्रष्ठैर्दक्षैर्वानरयूथपैः।
तथाभिद्रुत सा सेना यथादृश्यत रावणिः ॥ ३२ ॥

संस्मरन् भ्रातरं भक्त्या सत्येनास्त्रेण सत्यवित्[1]।
मेघनादमिषाकारं रावणं लक्ष्मणोऽग्रसत् ॥ ३३ ॥

---

1. 'स' क. पाठः.

अस्त्रेणापहृतप्राणे तस्मिन् भुवि निपेतुषि ।
हन्त हन्तेति वागासीत् सर्वेषामृक्षरक्षसाम् ॥ ३४ ॥

भुजातोलितरुद्राद्रौ जीवत्यपि दशानने ।
तस्यापक्रमणेनासीन्निष्प्राणं रक्षसां कुलम् ॥ ३५ ॥

सुरासुरहृदम्भोजविकासि परिदेवितम् ।
उच्चैरश्रावि लङ्कायां पौरराक्षसयोषिताम् ॥ ३६ ॥

मन्दोद्यमानां योधानां तां दशां वीक्ष्य वानराः ।
मुक्तामुक्तानि शस्त्राणि हृत्वा तैस्तान् बबाधिरे ॥ ३७ ॥

हर्षचन्द्रोदयस्मेरमनःकुमुदवासिताः ।
तमप्रतिमकर्माणमानर्चुः खेचरा दृशा ॥ ३८ ॥

सुरासुरजितः सूनोः श्रुत्वा तत्तादृशं क्षयम् ।
आरेभे मैथिलीं हन्तुं विललाप च रावणः ॥ ३९ ॥

यूथाधिपानसंख्येयान् मेघनादपदानुगान् ।
सबलः सानुजो रामो रणेष्वग्रसदग्रसत् ॥ ४० ॥

ततो मूलबलं भीममसंख्यं परिभाषया ।
पातालादुत्पतद् रामो दिनार्धेन समापयत् ॥ ४१ ॥

अपत्यामात्यसेनानीयूथाधिपनिमीलनम् ।
पातितं कुम्भकर्णं च छिन्नपक्षमिवाचलम् ॥ ४२ ॥

निमित्तानि च घोराणि विपरीतानि सर्वतः ।
अनिर्ज्ञातचरार्थीनां पौराणां परिदेवितम् ॥ ४३ ॥

प्लुष्टां च नगरीं सर्वामुल्काहस्तैः प्लवङ्गमैः ।
प्रस्तरीभूय रक्तौघैः प्रच्छन्नामपि मेदिनीम् ॥ ४४ ॥

अन्धस्त्रीबालवृद्धानां क्रन्दनानि समन्ततः ।
रुदतीं हतपुत्रार्तां प्रियां मण्डोदरीमपि ॥ ४५ ॥

प्रस्वापं स्वापदानानां तेजः काकुत्स्थयोरपि ।
उपलभ्य विनिश्चित्य निर्जगाम दशाननः ॥ ४६ ॥

अप्रसन्नैर्हयैर्युक्तं रथमारुह्य रंहसा ।
निर्दहन्निव लोकांस्त्रींस्तत्राभूद् यत्र राघवः ॥ ४७ ॥

चिरसंभृतसंरम्भस्फुरज्ज्वालावुभावुभौ ।
करिष्यमाणौ यत्किञ्चिद् घोरं ददृशतुर्मिथः ॥ ४८ ॥

सुरासुरा दिगन्तेषु निलीनास्तद्भयात् पुरा ।
दिदृक्षवः समागच्छन् प्रारब्धं रामरावणम् ॥ ४९ ॥

दिष्ट्या दृष्टिपथं नीतः कृतान्तेनासि साम्प्रतम् ।
इति वाचं द्विषो रामः प्रतिजग्राह सस्मितम् ॥ ५० ॥

अथ मातलिनानीतं सहस्राश्वयुजं रथम् ।
आरुरोह विभुर्धीमान् सवितेवोदयाचलम् ॥ ५१ ॥

केचिदालोकशब्देन केचिज्जयगिरा पुनः ।
रामं सम्भावयामासुर्देवासुरमहर्षयः ॥ ५२ ॥

कैलासोद्धरणक्रीडादर्शितस्वभुजाबलः ।
रावणः प्रगुणान् बाणान् मुमोच रघुनन्दने ॥ ५३ ॥

रामः क्षिप्तानिषूंस्तेन द्विबाहुर्बहुबाहुना ।
अर्धमार्गे चकर्तोच्चैर्दर्शयन् हस्तलाघवम् ॥ ५४ ॥

परस्परप्रयुक्तास्त्रैर्दीप्यमाना नभश्चराः ।
उपप्लवभयात् सर्वे दूराद् दूरमपासरन् ॥ ५५ ॥

तावद् रामविरामार्थमुद्धारिष्यति रावणे ।
प्रलयार्कप्रतीकाशश्चन्द्रहासास्तिरोदधे ॥ ५६ ॥

चक्रेणापि मुकुन्दस्य प्रागविज्ञापितव्यथः ।
स विषोद्गमकल्योऽभूदेकैकं रामसायकम् ॥ ५७ ॥

अपसृत्य ततः किञ्चिन्निजं सर्वङ्कषं तपः ।
शस्त्रे विधाय पौलस्त्यस्तं प्रहर्तुं प्रचक्रमे ॥ ५८ ॥

१. 'भाजया' ग. पाठः.

तत्रागस्त्यः समागम्य विदित्वा तच्चिकीर्षितम् ।
सावित्रेण प्रभावेन ररक्षेक्ष्वाकुनन्दनम् ॥ ५९ ॥

ज्वलितः स विशेषेण रावणं सर्वमर्मसु ।
तुतोदोद्भूतसंरम्भो विषदिग्धैरिवेषुभिः ॥ ६० ॥

प्राणान्तकारिणीं घोरां वेदनामविचिन्तयन् ।
अभिचक्राम काकुत्स्थं पुरा काल इवेश्वरम् ॥ ६१ ॥

ततस्तस्यार्धचन्द्रेण निचकर्त शिरांसि सः ।
भीमसंरम्भगर्भाणि जगतो व्यसनानि च ॥ ६२ ॥

शिरांसि तस्य लूनानि तेन सास्राणि रेजिरे ।
शिखराणीव नीलाद्रेर्धातुलिप्तानि वज्रिणा ॥ ६३ ॥

अमोघै रामबाणौघैः पतितेष्वपि मूर्धसु ।
न ययुः प्रत्ययं देवास्तत्प्रत्यापत्तिशङ्कया ॥ ६४ ॥

भुजैरनेकैर्विकृतस्तस्य कायः परेयुषः ।
पपातास्रवदाभोगश्छिन्नमूल इव स्नुहिः ॥ ६५ ॥

दिव्योद्यानादवचितैर्देवा देवमवाकिरन् ।
पुष्पैर्नवविकासोद्यन्मधूलीलोलषट्पदैः ॥ ६६ ॥

आविरासीद् वृषारूढं शैलकन्यासखं महः ।
सह भूतगणैस्तत्र यत्र रामो व्यवास्थितः ॥ ६७ ॥

अन्वदृश्यत वेधास्तं गिरां देवतया सह ।
उपास्यमानः परितः सपत्नीकैर्महर्षिभिः ॥ ६८ ॥

जववायुविभिन्नाभ्रमापत्य पततां पतिः ।
प्रश्रितः प्रश्रयाकल्पं जायया तमसेवत ॥ ६९ ॥

सच्चरित्रेण सुरभिं सुरभिः सुरशेवधिः ।
उपहर्तुमनाः कामान् निकषा तमवास्थिता ॥ ७० ॥

देवाननुगताः प्रह्वान् स्थिताः स्वाधिकृते पदे ।
दृग्भिरप्सरसः कामं स्वादु रामामृतं पपुः ॥ ७१ ॥

अथाभाष्य समाजं तं यथार्हं विहिताहंणः ।
सीतामानाययामास मूर्तां चारित्रदेवताम् ॥ ७२ ॥

क्षामां विवर्णां मलिनामेकवेणीधरां कृशाम् ।
अवगुण्ठितसर्वाङ्गीं यातयामेन वाससा ॥ ७३ ॥

रुदतीं श्वसितां नम्रवदनां धूसरालकाम् ।
चिरन्तनेन महता शोकेन स्फुरिताधराम् ॥ ७४ ॥

अपवारितसंचारपरिस्पन्दपदार्पिणीम् ।
विदूरीभूतसंस्कारशोचनीयनखाङ्गुलिम् ॥ ७५ ॥

दुर्दान्तराक्षसपुरीचिरवासैकदूषणाम् ।
चराचरस्य जगतः कुतूहलकराकृतिम् ॥ ७६ ॥

अनसूयाकृतं पुण्यं बिभ्रतीमनुलेपनम् ।
ददृशुः सर्वभूतानि रामश्च जयतां वरः ॥ ७७ ॥

ततोऽनुज्ञाप्य गिरिशं विधिं देवानृषीनपि ।
चकाराग्नौ विशुद्धां तां जानकीं सत्यसंश्रवः ॥ ७८ ॥

निर्दग्धाशेषपङ्करणां विप्रलम्भाग्निना विभोः ।
स तामाप्याययामास शीतलः शपथानलः ॥ ७९ ॥

रामस्तस्य समाजस्य मतेन मतिमत्तमः ।
विशुद्धचरितः शुद्धां धर्मपत्नीं समग्रहीत् ॥ ८० ॥

रावणस्य परेतस्य भ्रातृपुत्रवतः क्रियाम् ।
अन्त्यां विधत्स्व शिष्टानां रक्षसां त्वमधीश्वरः ॥ ८१ ॥

रक्ष लङ्कां नवीकृत्य रक्षांस्यशरणानि च ।
राक्षसेभ्यो भयं मा भूद् भुवनानां ममाज्ञया ॥ ८२ ॥

देवासुरमनुष्याणामिह बन्दीकृताः स्त्रियः ।
प्रस्थापय यथापूर्वं सर्वान् कल्पद्रुमानपि ॥ ८३ ॥

भविष्यति तवैश्वर्यमेवं कल्पान्तरेष्वपि ।
रामो विभीषणायेति ददौ वाचं सुधामिव ॥ ८४ ॥

इत्याज्ञां शिरसादाय कृत्वा सर्वं विभीषणः ।
भाग्योदयेष्वनुत्सिक्तः प्रभविष्णुमुपासदत् ॥ ८५ ॥

आपृच्छय कृच्छ्रादुत्तीर्णं रामं सह सुरर्षिभिः ।
सविधिः सपरीवारास्तिरोभवदुमापतिः ॥ ८६ ॥

आनीतं वायुपुत्रेण विमानं पुष्पकं विभुः ।
आरुरोह ततः सीता प्रियमन्वारुरोह च ॥ ८७ ॥

छत्रं दधार सौमित्रिस्तालवृन्तं हरीश्वरः ।
उभौ मारुतितारेयौ रुक्मदण्डे च चामरे ॥ ८८ ॥

विभीषणः खड्गराजं जाम्बवान् मणिपादुके ।
समांसमीने बाणानां तूणी पावकनन्दनः ॥ ८९ ॥

बह्वावर्तं नलः शङ्खं सुषेणश्चर्म चापलः ।
अन्ये च यूथपतयो राजलिङ्गानि दध्रिरे ॥ ९० ॥

विधायेत्थं रक्षां दशवदनविद्धस्य जगतो
विमानस्थः श्रीमान् सबलहरिरक्षोधिपयुतः ।
वचः कृत्वा पित्रोः समयमपि निर्व्यूह्य चकमे
ससौमित्रिर्गन्तुं रघुपतिरयोध्यां कुलपुरीम् ॥ ९१ ॥

इति रघुवीरचरिते षोडशः सर्गः ।

---

## अथ सप्तदशः सर्गः ।

अथ स्वरूपामृतसन्निकर्षादाप्यायितान्तःकरणां चिरेण ।
विमानगः प्रीतमनाः प्रियां स्वां जगन्नियन्तेति गिरं जगाद ॥ १ ॥

इमां प्रिये! पश्य विशालसालामदृष्टिमेयां त्रिदिवोपमेयाम् ।
लङ्कामलङ्कारवतीमनर्घैः सुरद्रुमैः कामदुघैरनेकैः ॥ २ ॥

इमां कुबेराय पुरोपजह्ने कृतिप्रवीणः सुरलोकशिल्पी ।
उत्सार्य तं राक्षसराड् जहार पुरीमम्रुं चैव विमानराजम् ॥ ३ ॥

रक्षःपुरीयं सुरदानवानामगोचरो दुर्गतया महत्या ।
आनीय लोकप्रथितानि रत्नान्यत्रास्तशत्रुर्बुभुजे दशास्यः ॥ ४ ॥

हनूमतानेन विचिन्वता त्वां प्रारभ्यतास्याः प्रथमः प्रमाथः ।
पुनः प्लवङ्गैर्गिरिसालहस्तैः सराक्षसेयं सकला विरुग्णा ॥ ५ ॥

आपूरितां शोणितकर्दमार्द्रै रक्षःशरीरैरचलप्रमाणैः ।
रणक्षितिं भीरु! विलोकयेमामाक्रीडशालामिव कालरात्रेः ॥ ६ ॥

अथ स्थलादुत्थितवान् पयोधिं द्विधा विभज्य स्थिरसन्धिबन्धः ।
ससाहसानां निकषः कपीनां दृश्यः पुरस्तान्नलसेतुरेषः ॥ ७ ॥

अनन्तरत्नैकनिधानमुच्चैर्दैत्याद्रिनागाश्रयवारिगर्भः ।
गभीरतायाः पदमेकमक्ष्णा संगृह्यतां भामिनि! सिन्धुराजः ॥ ८ ॥

स्वं सप्तधात्मानमयं विधाय रसैश्च तावद्भिरमून् विभिद्य ।
इयानसावीदृश इत्यचिन्त्यः प्रवर्तते विश्वसृजां धियापि ॥ ९ ॥

भूतेषु पञ्चस्वपि संहृतेषु क्रमात् प्रधाने पुरुषं प्रविष्टे ।
अयं महाकल्पविरामकालेऽप्यनश्वरः प्रत्युत वर्धते च ॥ १० ॥

प्रमथ्यमानादमृताय दिव्यैरभूदमुष्मात् किल पद्महस्ता ।
यया वृतः सुन्दरि! पद्मनाभः समस्तसौभाग्यपदं बभूव ॥ ११ ॥

असावपः स्वं मरुतोपनीय रसान्तरं च प्रतिपद्य तासु ।
घनत्वमाश्रित्य विधाय वृष्टिं त्रिवर्गबन्धाय बिभर्ति विश्वम् ॥ १२ ॥

रत्नाकरोऽपि स्थितये स्ववेलामलङ्घयन्नार्द्रतमस्वभावः ।
नित्यातिथेरप्ययमौर्ववह्नेः स्वजीवनेनैव करोति तृप्तिम् ॥ १३ ॥

अस्याम्बु तल्पीकृतशेषभोगः श्रिया भुवा चानुगृहीतकामः ।
नाभीसरोजस्थितपद्मयोनिस्तुतोऽधिशेते भगवान् मुकुन्दः ॥ १४ ॥

---

१. 'स्त्रा' ख. पाठः.

स्वच्छन्दवारिप्रसरोपरोधादयं प्रकामं क्षुभितो रुषेव ।
मरुद्वशादूर्मिकरैरुदस्तैरितस्ततस्ताडयतीव सेतुम् ॥ १५ ॥

निमज्जनोन्मज्जनचञ्चलानि गजाश्वयादांसि निरन्तराणि ।
समुद्रवाताहतिमेदुरासावनारतं स्नात इवोर्मिमाला ॥ १६ ॥

वेलेयमेलाफलगन्धगर्भैः समीरणैर्वासितसैकतौघा ।
आलोकनीया शुभशुक्तिमालानिष्ठ्यूतमुक्तावलिदन्तुरान्ता ॥ १७ ॥

क्वचिच्च नीचैः क्वचिदुच्चवृत्ति क्वचित् समं वर्त्म विगाहते च ।
मनोनुकूलप्रसरं महिम्ना निजेन यात्येवमिदं विमानम् ॥ १८ ॥

असौ समस्तां कपियातुसेनामस्मानपीत्थं बलवद् दधानः ।
अनुग्रहेण द्रुहिणस्य भूम्ना सहिष्णुतामेति विमानराजः ॥ १९ ॥

तिरोभवद् दूरतया व्यतीतं पश्य प्रदेशान्तरमब्धिपारे ।
क्रमेण यत् सूक्ष्मतरं निपीतं धूमोद्गमेनेव मलीमसेन ॥ २० ॥

मनोहरैश्चन्दनपल्लवानां प्रभोदयैराहितसान्ध्यकान्तिः ।
अयं परस्तान्मलयाद्रिरस्मादारभ्यतानेन नलेन सेतुः ॥ २१ ॥

मयि स्थिते सागरमुत्तितीर्षाविहास्तबोधे च मदेन तस्मिन् ।
सौमित्रिणा सम्भृतदर्भशय्ये प्रायोपवेशस्य कृतोऽत्र तल्पः ॥ २२ ॥

तृणद्रुमप्राणभृतामभूमिर्निशासु चोग्रा मृगतृष्णिकाभिः ।
कण्डोर्मुनेः कोपहुताशनेन नीता विकारं मरुभूरियं सा ॥ २३ ॥

उदन्यया यत्र गतैः प्लवङ्गैः शुष्टैर्बिलं भीमतमं प्रविश्य ।
स्वयंप्रभाया महतः प्रसादाद् यात्रोद्यतं जीवितमाललम्बे ॥ २४ ॥

विन्ध्याचलोऽयं शमितप्रवृद्धिर्महर्षिणा कुम्भभुवा सुरार्थम् ।
चिकीर्षुणा मानिनि! योगमायानिवासभूरेष विशेषदृश्यः ॥ २५ ॥

उपत्यकालग्नघनो निरुद्धमरुत्पथः शृङ्गसमुच्छ्रयेण ।
स माल्यवानेष यदाश्रयोऽसौ हरीश्वरो बालिभिया निलीनः ॥ २६ ॥

मतङ्गशापेन निवीतसीमा दुरासदोऽयं कपिनायकस्य ।
बिवित्सता त्वां तपनस्य सूनुर्मया कृतार्थीकृत एष भूयः ॥ २७ ॥

अनेन यावत् सवितुः कराणां गतिः प्लवङ्गैर्विचिनासि तावत् ।
अयं हनूमान् पुनरग्रदर्शी विशेषतः क्लेशभृदन्तरार्यैः ॥ २८ ॥

एषा मधूद्गन्धिसरोजभूषा मन्दानिलान्दोलितपेलवोर्मिः ।
निघ्नत्वमापादयति प्रयाणे पम्पा मनोनेत्ररसायनं मे ॥ २९ ॥

वन्यैः प्रसूनैरधिवास्यमाना समन्ततः कूलतटा शिलाभिः ।
विशुद्धरूप्यद्रवनिर्मलाम्भःस्फुरज्झषस्पन्दितपद्मनाला ॥ ३० ॥

इयं मतङ्गाश्रमभूमिरस्यामवस्थितं मां श्रमणानियोगात् ।
विषोल्बणस्त्वद्विरहादनार्थं सम्मोहयामास वलाहकाहिः ॥ ३१ ॥

अज्ञातनक्तन्दिवमभ्रपाथःप्रपातदुर्दर्शदिगन्तरालम् ।
दृष्ट्वा नभो लक्ष्मणमात्रसाक्षि प्रवृत्तमस्यां परिदेवितं मे ॥ ३२ ॥

पयोदपातैः सकदम्बगन्धैर्भुवा सिलिन्ध्रोद्गममुद्वहन्त्या ।
सबर्हिकेकैर्गिरिभिश्च किं किं त्वया विहीने मयि न व्यधायि ॥ ३३ ॥

नभः किलाश्लिष्टमनन्वितानि सञ्जल्पितानि महितान्युदश्रु ।
स्थितं प्रयातं शयितं विना त्वां मया तदास्तामिह वासवार्ता ॥ ३४ ॥

यद् योजनायामभुजप्रसारं रक्षः कबन्धाख्यममोचि शापात् ।
तत् तच्छरीरं गिरिसन्निकाशं सौमित्रिणानेन लघु व्यदाहि ॥ ३५ ॥

तरक्षुकण्ठीरवखड्गनागैर्निषेवितोऽयं वनराजिगर्भः ।
मया त्वदन्वेषपरेण भद्रे! नादृष्टमस्पृष्टमपीह किञ्चित् ॥ ३६ ॥

इदं पुरस्ताद् वनमन्यदत्र शुचिस्मिते! दिष्टमदर्शयन्मे ।
पदाम्बुजात् प्रच्युतमंशुजालैः स्मेरं मनोज्ञैर्मणिनूपुरं ते ॥ ३७ ॥

आदास्यमानः कृतदास्यमानं तदङ्घ्रिपङ्केरुहयोर्भवत्याः ।
निसर्गभिन्नावपि शोकहर्षावुद्वहवानस्मि समं तदानीम् ॥ ३८ ॥

अत्रारुणत् त्वां छलतोऽपहृत्य प्रतिप्रयातं दशकण्ठमारात् ।
पितुः सखा मे हितकृज्जटायुस्तस्यापदानं तव हृद्यभूत् किम् ॥ ३९ ॥

इदं तदल्पद्रुमवारिशष्पं सशर्करं प्रान्तमरक्षिलक्ष्यम् ।
विलोभितश्चित्रतमाकृतित्वाद् यत्रास्मि मारीचमृगेण नीतः ॥ ४० ॥

अन्वग्रहीत् त्वामनुलेपनेन यासावसाधारणसौरभेण ।
भक्त्यात्रिपत्नीं प्रणम प्रसन्ना सेयं तपोत्पादयिता शिवानि ॥ ५४ ॥

निसृष्टविद्वेषनिवृत्तसत्त्वा महीरुहैः स्वादुफलैः परीता ।
अधीतिभिः शिष्यगणैः सघोषा ह्येषा भरद्वाजनिवासभूमिः ॥ ५५ ॥

मनोहरैरप्सरसां विलासैरस्पन्दितान्तःकरणादमुष्मात् ।
आ ब्रह्मलोकादपि निर्व्यपेक्षाद्दाशङ्कते नित्यममर्त्यनाथः ॥ ५६ ॥

वनं विविक्षुं पितृवाक्यतो मां प्रत्यानिनीषुं पुनरप्ययोध्याम् ।
असौ कृपालुर्भरतं ससैन्यं सभाजयामास तपोमहिम्ना ॥ ५७ ॥

यास्यन्ननावृत्ति पदं हुताशे यः सन्निधौ नः स्वतनुं जुहाव ।
तस्याश्रमोऽयं शरभङ्गनाम्नस्तद्वालिवाद्यापि विराजते यः ॥ ५८ ॥

उद्धार्यमाणोऽयमिहोपहर्तुं प्रत्युद्व्रजन्त्येव ध्रुवा पुरस्तात् ।
करोति मे तन्वि! चिरेण दृष्टश्चित्तोत्सवं कश्चन चित्रकूटः ॥ ५९ ॥

सख्युर्ममेदं पुरमुच्चमृद्ध्या गुहोपमानस्य गुहस्य यस्मिन् ।
मामीक्षमीक्षं व्यलपत् सुमन्त्रस्त्वयैव कैकेयि! यशस्विनीति ॥ ६० ॥

उष्णीषतां पर्वतमूर्ध्नि यान्ती निम्नगा मौक्तिकदामशुभ्रा ।
मन्दाकिनीयं मदिराक्षि! भूमेरालिप्रती भूषणतां निशाति ॥ ६१ ॥

यां कुण्डिका धातुरसूत यस्याः सूतिः पदाम्भोजजलाभिषेच्या ।
यावर्धतेशानजटाटवीषु प्रेक्षस्व तां मैथिलि! दिव्यसिन्धुम् ॥ ६२ ॥

सकृत् स्मृता चाभिहिता त्रिकूटाद् गङ्गेति पुंसां दुरितं प्रमार्ष्टि ।
एषा शरीरं त्यजताममुष्यां सद्यो भवेद् रुद्रगणाधिकारः ॥ ६३ ॥

अस्मासु सम्बन्धनिबन्धनस्यां प्रजार्थेन प्रपितामहेन ।
तपोविशेषैरवतारितायाः किं वेत्सि सर्वं मुनिभिः प्रगीतम् ॥ ६४ ॥

इमां च वीक्षस्व कलिन्दकन्यां निविष्टसेकं कुसुमायमानाम् ।
या नीलरत्नैर्निबिडानुबद्धा माला भुवः कण्ठगतेव भाति ॥ ६५ ॥

१. 'सा तुङ्गतापुञ्चलितापि दू', २. 'स्वां', ३. 'यां' क. पाठः.

एते समुद्राभिमुखं प्रयान्त्यौ वेगादहंपूर्विकया दधाते ।
परस्परेणोर्मिकराभिघातं वर्णोज्ज्वले जह्नुकलिन्दकन्ये ॥ ६६ ॥

अस्मासु पूर्वं विपिनोन्मुखेषु त्वत्प्रार्थितार्थं निरवर्तयद् यः ।
श्यामो वटः सोऽयमसुं प्रणम्य श्रेयांसि गन्तासि मनोगतानि ॥ ६७ ॥

एषा विशालाक्षि! विलोकनीया मातेव साक्षात् सरयूः प्रसन्ना ।
इक्ष्वाकुवंश्यान् नरलोकनाथानवर्तयद् या विमलैः पयोभिः ॥ ६८ ॥

आलक्ष्यते व्योमनि सैन्यधूलिः सुमन्त्रमुख्याः प्रकृतिप्रधानाः ।
ततः पुरोधाय वसिष्ठमाराद् मामर्हयिष्यन् भरतः पुरस्तात् ॥ ६९ ॥

विज्ञाप्यमाने पवनात्मजेन मदागमे संभृतभक्तिभारः ।
प्रत्युद्गमायैष मतिं विधत्ते पश्यास्य सौभ्रात्रमतिप्ररूढम् ॥ ७० ॥

अस्तोपचारोच्छ्वसिताङ्गरूक्षो मत्पादुकोत्संसजटानिबन्धः ।
चीराम्बरानद्धकटिः क्षीणोऽप्ययं मुनीनामपि कौतुकाय ॥ ७१ ॥

युवाप्ययं दाशरथिर्मनस्वी मया विना जिघ्रति राजलक्ष्मीम् ।
अस्यानुभावेन दुरुद्वहेन संरक्ष्यते स्थैर्यमिदं कुलं नः ॥ ७२ ॥

इत्थं वचस्यभिहिते रघुपुङ्गवेन
विज्ञाय तन्मतमथोन्नमता महिम्ना ।
अह्नाय पुष्पकमवातरदन्तरिक्षात्
प्रत्युद्गतं सकलजानपदाक्षिपद्मैः ॥ ७३ ॥

तस्माद् विभोरवतरिष्यत एव पादौ
जग्राह नाम भरतो जटिलेन मूर्ध्ना ।
जन्मेदमार्य! सफलीकुरु मे कृपा ते
मातेव पातु जनमेनमिति ब्रुवाणः ॥ ७४ ॥

नम्रस्य तस्य विनयैकविभूषणस्य
भ्रातुः शिरस्युपनिबद्धजटाकलापे ।
आजिघ्रता रघुवरेण लघु व्यधायि
प्रालेयवारिशिशिरा नयनाम्बुवृष्टिः ॥ ७५ ॥

---

१. 'र्वे', २. 'प' क पाठः. ३. 'र्त्य' ग. पाठः.

दुर्दान्तरावणकपोलचपेटदक्षं
सुग्रीवपाणिमवलम्ब्य करेण देवः ।
पौलस्त्यदर्शितपथोऽवततार यानात्
तच्च न्ययुङ्क्त सपदि द्रविणेश्वराय ॥ ७६ ॥

छत्रप्रमाणतनुसंस्थिति तत् प्रणम्य
रामस्य पादयुगलं सुकृतैकलभ्यम् ।
आशां विवेश धनदाध्युषितां प्रमोदाद्
वेगानुयातघनराजिकृतोपचारम् ॥ ७७ ॥

वार्ताविशेषमनुयुज्य मिथोऽर्हणावत्
प्रेम्णाङ्गमङ्गमभिवीक्ष्य परामृशद्भिः ।
सम्भूय दाशरथिभिस्त्रिभिरिद्धतृष्णैः
सौभ्रात्रसंज्ञममृतं रसिकैरपायि ॥ ७८ ॥

पङ्क्त्यां गुरोः प्रमुदितस्य शिरः स्त्रमुच्चैः
सम्भाव्य दर्शितपथोऽग्रगतेन तेन ।
पूर्णं बृसीघटकुशाजिनवल्कमूलै-
र्वन्यैः फलैश्च भरताश्रममाससाद ॥ ७९ ॥

कृत्वा विधिं व्रतसमापकमाप्तवाचा-
मग्रेसरेण गुरुणा विहिताभ्यनुज्ञः ।
भ्रातृप्रयुक्तसमुदाचरितः प्रवेष्टुं
देवः समारभत वंशपुरीमयोध्याम् ॥ ८० ॥

विज्ञाय रामहृदयं हनुमत्सुमन्त्रा-
वाज्ञां वितेनतुरलङ्कृतये पुरस्य ।
पौरेषु मन्त्रिषु च मङ्गलतूर्यघोषं
शङ्खोत्तरं च हरिदन्तगतं विधातुम् ॥ ८१ ॥

उत्थापितध्वजशताग्रलसत्पताका
गन्धोदकच्छुरितसौरभराजमार्गा ।

---

१. 'म्भाव्य दा', २. 'च कर्तुम्' क. पाठः.

विन्यस्तमङ्गलगृहाङ्गणभूमिभागा
सा पूरलङ्कृतिमती रुरुचे जनीव ॥ ८२ ॥

अग्रे बभूवुरथ जानपदाः सपौरा-
स्तानन्वगीयतुरुभौ कपियातुनाथौ ।
कृत्वा पुरः परमकारुणिकं वसिष्ठं
रामानुजैश्च लघु तत्पदमन्वयायि ॥ ८३ ॥

तूर्यध्वनिद्विरदबृंहितवाजिहेषा-
पादातनादरथमण्डलचक्रघोषैः ।
रक्षःकुलान्तक ! रघूद्वह ! राम ! देव !
श्रेयांसि साधय दृशा करुणार्द्रया नः ॥ ८४ ॥

इत्यादिषु स्तुतिषु मागधवन्दिसूतै-
रातोद्यपाणिभिरगायि गिरां निबन्धः ।
विप्रैर्वृतः प्रहितमङ्गलसूक्तपाठै-
स्तारागणैरिव शरद्विमलः शशाङ्कः ॥ ८५ ॥

निश्छिद्रकल्पितमनोज्ञतरोपचारां
देवः पुरीं पुररिपुप्रतिमो विवेश ।
क्लृप्ताः प्रजाभिरुपदा विविधप्रकारा
दृष्ट्यानुगृह्य दिवमेश्वरवंशकेतुः ॥ ८६ ॥

कक्ष्याश्च सप्त परिलङ्घ्य स राजवीथी-
राभ्यन्तरं पुरवरं पुनराससाद ।
इक्ष्वाकुभिश्चिरमधिष्ठितमत्यमर्त्यैः
सिंहासनं कलितकान्ति मणिप्रवेकैः ॥ ८७

स्थित्वैव स क्षणमनुस्मृततातपादः
कम्रेण पाणिकमलेन परामशर्श ।
अत्रोपवेशयतमर्हणया द्विजातीन्
रक्षःप्लवङ्गवृषभावपि सानुगन्तू ॥ ८८ ॥

---

१. 'कारि गि', क॰ पाठः.

आपृच्छ्य नः कुलगुरुं महितं वसिष्ठं
सर्वक्रियानिपुणमृक्षपतिं च धन्यम् ।
अत्राभिषेकविधयेऽधिकृतैर्यथास्वं
सम्पाद्यतां परिकरः सकलः समेतैः ॥ ८९ ॥

(ऐश्वर्यमभ्यधिकमल्पमपि स्वकीयं
नोपेक्षणीयमिह जातु कुलक्रमाप्तम् । ?)

यूना सतापि सुखवर्त्मपराङ्मुखेन
यद् भ्रातृवत्सलतया भरतेन सोढम् ।
तन्न्यासभूतमधुना परिगृह्य तस्मात्
तं भारखिन्नमहमद्य सभाजयामि ॥ ९० ॥

इत्थं सुमन्त्रपवनप्रभवौ नियुज्य
सौमित्रिमैथिलसुताभरतानुयातः ।
स द्वित्रवर्षवरदर्शितवेश्ममार्ग-
स्तं वन्दितुं गुरुजनाभिमुखो बभूव ॥ ९१ ॥

विन्यस्तमङ्गलविशेषविशिष्टमारात्
तस्मिन् प्रविष्टवति मातृगृहोपकण्ठम् ।
आराध्य दिव्यकुसुमाक्षतलाजमुख्य-
नीराजनाविधिमकुर्वत मौलवध्वः ॥ ९२ ॥

आविश्य मूलभवनं विहितोपचारं
धात्रीजनेन सहसानुगतः सदारः ।
स्नेहस्नुतस्तनमुखं शिशिराश्रुनेत्रं
मातृत्रयं स समवन्दत निर्विशेषम् ॥ ९३ ॥

तेषां प्रणाममुपपादयतां सुताना-
माघ्राय मूर्धनि करेण परामृशन्त्यः ।
हर्षोत्थबाष्पनिगृहीतगलान्तराला-
स्ता नाशकन् क्षणमुदीरयितुं वचांसि ॥ ९४ ॥

ताभ्यः सुताधिगमसम्भृतसम्मदाभ्यो
लब्धाशिषः पुनरवेक्षितसत्यधर्मा ।
आलेख्यमात्रपरिशिष्टतनोः पितुस्ते
वेश्म प्रविश्य तमवन्दिषताईणाभिः ॥ ९५ ॥

अथ सकलगुणानामाकरो रामभद्रः
स्वभवनमुपगम्य प्रेयसीं तत्र कृत्वा ।
निभृतमनिभृतान्तर्मोदवाचालितान्तः-
करणमगमदाज्ञाकर्मभाजं समाजम् ॥ ९६ ॥

अमरपतिसमानैः पूर्वमिक्ष्वाकुभिर्यत्
सुचिरमनुगृहीतं मङ्गलाध्यासनेन ।
शशिरुचि मणिपीठं तत् तयाधिष्ठितं तं
विधिवदमृतकुम्भेनाभ्यषिञ्चद् वसिष्ठः ॥ ९७ ॥

सुचिरमननुभूतैः स्वैर्दशग्रीवभीत्या
सुभृशमवाकिरन्तः पारिजातप्रसूनैः ।
जगदभयवदान्यं देवमालक्ष्य देवा
जय जय रघुनाथेत्युद्गिरन्ति स्म वाचः ॥ ९८ ॥

वनजुषि सति यस्मिन् पूर्वमासीत् तिरश्चा-
मपि तनुषु विरागः स्वासु साकेतभाजाम् ।
स खलु सकलचेतोहारिशीलानुरक्त-
प्रकृतिरिति न वाच्यं श्रेयसामेकहेतुः ॥ ९९ ॥

अखिलभुवनरक्षाजागृवेर्यस्य पूर्वे
कति कति न यदृच्छासङ्गमात् सिद्धिमापुः ।
स हि मनुकुलभूपैः पालितानां प्रजानां
शरणमभवदित्थं वाचि नाश्चर्यमासीत् ॥ १०० ॥

भरितभरतकर्मस्नेहबन्धः प्रसुप्ता-
वपि शिवमाभवाञ्छल्लक्ष्मणे सप्रसादः ।
सततनिहितचेता लोभनीये कुमारे
जनकदुहितृजानिः सोऽन्वभूद् राजलक्ष्मीम् ॥ १०१ ॥

---

१ 'या निष्ठि' क. पाठः.

निशिचरहरिनाथौ तेन सम्मान्यमाना-
वनुदिनमुपचारैः कल्पवृक्षोपमेन ।
ससुखमुषितवन्तौ वत्सरं तन्नियोगा-
न्निजपुरमभियातौ तत्प्रसादैकमित्रौ ॥ १०२ ॥

अथ हरियुवराजौ जाम्ब(वृ? वा)नीलतारौ
पनसविविदमैन्दा वेगदर्शी सुषेणः ।
शतबलिरपरे च स्निग्धमापृच्छ्य नम्राः
कपिवरमनुयाता रामपादौ स्मरन्तः ॥ १०३ ॥

भवदुपगमभाग्यान्मित्रलाभोऽपदानं
दशवदननिपातः संगमश्च प्रियायाः ।
प्रकृतिसहजयोगो वंशपुर्यां प्रवेशः
पुनरयमभिषेकः सर्वमेतन्ममासीत् ॥ १०४ ॥

पशुपतिचरणाङ्कप्रस्तरं पारियात्रं
कुलगिरिमभिजुष्टं योगिभिः सिद्धसाध्यैः ।
पवनसुत! भज त्वं युक्तचित्तः समाधौ
स्मृतवति मयि तात! प्राप्नुहीमं प्रदेशम् ॥ १०५ ॥

इति गिरि गदितायां पादयोः साश्रु नम्रं
करकमलतलेन प्रस्पृशन् मूर्ध्नि देवः ।
व्रज गुरुगुण! तुभ्यं भद्रमस्त्वेवमुक्त्वा
पुनरपि हनुमन्तं व्यादिदेश प्रयातुम् ॥ १०६ ॥

स तु तदनुगृहीतश्चेतसानम्य देवीं
विषमविपदि मित्रं लक्ष्मणं चोपगम्य ।
अधिगततदनुज्ञः स्वैरमापृच्छ्य चान्यान्
सुकृतिभिरनुभूतामाविवेशोत्तराशाम् ॥ १०७ ॥

इति सुरहितहेतोस्ताटकादि प्रवृद्धं
निशिचरकुलमद्धा रावणान्तं निगृह्य ।

सकलभुवनरक्षामाततानावतीर्णो
भुवि दशरथसूनुच्छद्मना पद्मनाभः ॥ १०८ ॥

यस्यानुस्मृतिरंहसां प्रशमनी यस्यास्ति सत्ये स्थिति-
र्यो निष्किञ्चनतापसैकशरणं यो मैथिलीजीवितम् ।
यो निर्दान्तनिशाचरेश्वरशिरश्छेदप्रवीणस्त्विषां
पत्युर्वंशविभूषणं विजयते देवो रघूणां पतिः ॥ १०९ ॥

इति रघुवीरचरिते सप्तदशः सर्गः ।

रघुवीरचरितं समाप्तम् ।

---

शुभं भूयात् ॥